# चन्दमामा

सम्पुट : १७ सप्टम्बर्- २००० सञ्चिका - ५



अन्तरङ्गम्

कथा :



## एतस्य अङ्कस्य विशेषा :

परन्धामस्य मोक्षप्राप्तिः (वेतालकथा)





अहो ओलम्पिक्स्

भारत-गौरव-गाथा





पिशाचयोः प्रतीकारः

Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai-600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai-600 026. Editor: Viswam

Editor
VISWAM
Editorial Advisors
RUSKIN BOND
MANOJ DAS
Consultant Editor
K. RAMAKRISHNAN

ALL CORRESPONDENCE TO
Chandamama Magazine Division
Chandamama Buildings
Vadapalani, Chennai–600 026
Tel/Fax : 4841778/4842087
e-mail : chandamama@vsnl.com

MUMBAI OFFICE
2/B Naaz Buildings
Lamington Road
Mumbai-400 004
Phone: 022-388 7480
Fax: 022-3889670

**For USA**
**Single copy $2**
**Annual subscription $20**
*Mail remittances to*
**INDIA ABROAD**
43 West 24th Street
New York, NY 10010
Tel: (212) 929-1727
Fax (212) 627-9503



## अगस्द् - २००० अङ्के प्रकाशितानां प्रश्नानाम् उत्तराणि

१. अ. गुणाढ्यकृतं - बृहत्कथाद्वारा प्रेरितं दशकुमारचरितम् ।
आ. एवं हि श्रूयते यत् योगवासिष्ठरामायणं वसिष्ठः वाल्मीकिः च मिलित्वा कृतवन्तौ इति ।
इ. विशाखदत्तविरचितं मुद्राराक्षसम् ।
ई. शूद्रकः । एतस्य प्रसिद्धा कृतिः - मृच्छकटिकम् ।
२. अर्जुनः, बभ्रुवाहनः, उलूपिः च ।

*संस्थापकौ –*

**चक्रपाणिः नागिरेड्डी च**

# ओलम्पिक्स्फूर्तिः

समग्रः प्रपञ्चः नूतनशतकस्य प्रथमाम् ओलम्पिक्स्पर्धां सकुतूहलं प्रतीक्षते । मानवसमाजः यावत्, तावत् एव पुरातनाः क्रीडाकूर्दनादयः । महाभारतादिषु प्राचीनग्रन्थेषु अपि क्रीडादीनम् उल्लेखः दृश्यते एव । तथापि अधिकृतोल्लेखः तु क्रि. पू. ७७६ तमे वर्षे आरब्धः । तस्मिन् वर्षे ग्रीस्देशे अथेन्स्नगरे ओलम्पिक्क्रीडाः प्रवृत्ताः । ७७६ तमे क्रिस्तपूर्वाब्दे, २१७ तमे क्रिस्ताब्दे च ओलम्पिक्स्पर्धासु विजयं प्राप्तवताम् आवलीं २२१ तमे क्रिस्ताब्दे जूलियस् अफ्रिकेनसः सज्जीकृतवान् आसीत् । (तत्काले महिलाः तासु स्पर्धासु भागं वोढुं न अर्हन्ति स्म ।)

ओलम्पिया जेयुस्देवतायाः पवित्रम् आयतनम् । तत्र आरब्धा क्रीडा 'ओलम्पिक्' इत्येव नाम प्राप्नोत् । मानवस्य शरीरं प्राणाः च भगवता अनुगृहीताः । शरीर-जीवाभ्यां या उत्कृष्टा सिद्धिः प्रदर्श्येत सा एव भगवतः समाराधनम् । आदौ विजेता पुरस्काररूपेण आलिव्पर्णानि प्राप्नोति स्म । तदा भागग्रहीतारः क्रीडोन्मादवन्तः आसन्, किन्तु अहितकरमार्गानुनायिनः तु न आसन् । विंशतितम-शतकीयः कविः ग्रेण्ट्लैण्ड्रैस्वर्यः तत्कालीनां क्रीडास्फूर्तिम् एवं वर्णयति – ''स्पर्धायां भागग्रहणं कुर्वतां व्यवहारे जयपराजयौ गौणौ आस्तां, भागग्रहणक्रमः एव मुख्यः भवति स्म ...'' इति । श्रेष्ठः क्रीडापटुः भगवदंशोपेतः इति परिभाव्यते स्म तदा ।

१८९६ तमे वर्षे फ्रान्स्देशीयेन बरान् डे कण्डर्टन्वर्येण ओलम्पिक्क्रीडानां पुनरुज्जीवनं कृतम् । तदा समग्रे जगति स्पर्धाविषये उत्साहः कुतूहलं च दृष्टम् । जनाः क्रीडापटूनां स्फूर्तिं श्लाघन्ते स्म । सा क्रीडास्फूर्तिः ओलम्पिकीये प्रतिज्ञावचने प्रतिफलिता अस्ति – 'वयं स्पर्धायां भागं गृह्णीमः ।.... वास्तविकक्रीडास्फूर्त्या वयम् अत्र भागं ग्रहीतुम् इच्छन्तः स्मः । .... क्रीडागौरवं वर्धयिष्यामः च' इति ।

# वार्ताविशेषाः

## डयनोपहारः



दशमकक्ष्यायाः फलितांशः यदा घोषितः तदा चेन्नै-(मद्रास्)नगरस्थः कश्चन विद्यालयः महान्तं सन्तोषम् अन्वभवत् । कारणं तु एतदस्ति यत् शालायाः द्वे बालिके - बृन्दा प्रवीणा च - अत्यधिकान् अङ्कान् प्राप्तवत्यौ आस्ताम् । ताभ्यां पारितोषिकरूपेण धनं दत्तम् । शिक्षणस्य अनुवर्तनाय छात्रवृत्तिः अपि कल्पिता । विद्यालयेन अन्यदपि किञ्चित् निर्णीतं यत् ते विहारार्थं हैद्राबाद्नगरं प्रेषणीये, तदपि विमानेन इति ! तत्र तैः एतत् कारणम् उक्तं यत् ग्रामप्रदेशात् आगताः छात्राः एतेन नगरवासिनां छात्राणाम् अनुभवस्यापि परिचयं प्राप्नुवन्ति इति । एषः प्रश्नः तु शिष्यते यत् नगरच्छात्रेषु अपि कियन्तः विमानप्रयाणस्य अवसरं प्राप्नुवन्ति ? इति । अपरं च प्रपञ्चज्ञानदायकात् ऐतिहासिकस्थलदर्शनात् अपि विमानप्रयाणमेव प्रामुख्यम् आवहति किम् ? अनेके विद्यालयाः पत्रिकासु स्थलप्राप्तिविषये महान्तं प्रयत्नं कुर्वन्ति यत्र ते स्वविद्यालयस्य बुद्धिमतां छात्राणां छायाचित्राणि, तैः प्राप्तान् अङ्कान्, स्थानानि च मुद्रापयन्ति । तादृशानि अपि उदाहरणानि न विरलानि यत्र विद्यालयाः शिक्षणसंस्थाः वा स्थानं प्राप्तवतां तेषां छात्राणां छायाचित्राणि प्रकाशयन्ति ये विद्यार्थिनः एकवारम् अपि तं विद्यालयं प्रविष्टाः न भवन्ति । अत्र लाभः कस्य - च्छात्राणाम् उत विद्यालयानाम् ? चिन्तनीयः अंशः एषः ।

* * * * * *

## स्नेहिताः, न इदानीं शत्रवः



१६ कि. मी. दीर्घतायुक्तः सेतुः यश्च डेन्मार्क-स्वीडन् - देशयोः मध्ये सम्पर्कं कल्पयति, सः गतस्य जुलैमासस्य १ दिनाङ्के उद्घाटितः । एतेन तयोः देशयोः आ चतुश्शतवर्षेभ्यः प्रवृद्धं वैरं विस्मर्तुं कश्चन अवसरः कल्पितः अभवत् ! ७००० वर्षेभ्यः पूर्वं तौ समानदेशत्वेन एव निर्दिश्येते स्म । हिमयुगे च तौ पृथक् जातौ । १००० वर्षेभ्यः पूर्वं तौ शत्रू जातौ । विवादस्य कारणम् आसीत् स्वीडन्देशस्य स्कानेप्रदेशः यश्च ६०० वर्षाणि यावत् डेन्मार्कदेशस्य आधीन्ये आसीत् । बहूनि युद्धानि प्रवृत्तानि । अन्ततो गत्वा १६५८ तमे वर्षे स्कानेप्रदेशः

## क्षमां याचते देशः



याङ्गकाक्नगरस्य कस्यचन वाहनचालकस्य पुत्री चतुर्दशवर्षीया ऐषा नवावी मलेषियादेशस्थं लाङ्ककविनगरं गतवती जूनमासस्य पूर्वार्धे । तेन '२००वर्षेभ्यः पूर्वं कयाचित् भाईल्याण्डसुन्दर्या शप्तः अस्माकं देशः इदानीं शापमुक्तः जातः' इति मलेषियानिवासिनः अभावयन् । शापं दत्तवती आसीत् महसूरिः । तस्याः कुले एव जाता इयम् ऐषा । जनाः एवं विश्वसन्ति यत् फुकेट् - इत्यत्र जाता महसूरिः उत्तमां जीविकाम् अन्विष्यन्ती मेलेषियाम् (तदनीन्तनं मलयां) आगता । सा लाङ्ककविं प्राप्य तत्र कञ्चित् सैनिकं परिणीतवती । यदा सः सैनिकः युद्धाय गतः तदा ग्रामप्रमुखस्य पत्नी असूयया एवं किंवदन्तीं प्रसारितवती - 'पत्युः विषये महसूर्याः व्यवहारः विश्वासार्हः नास्ति' इति । अतः महसूर्यै मरणदण्डनं दत्तम् । मान्त्रिकच्छुरिकया यदा तस्याः शरीरं विद्धं तदा तत्र श्वेतं रक्तं दृष्टं येन तस्याः निरपराधित्वं प्रमाणितम् अभवत् । मरणात् पूर्वं सा शप्तवती यत् 'अग्रिमेषु सप्तसु वंशश्रेणीषु द्वीपेऽस्मिन् स्त्रीशिशोः जन्म मा भूत्' इति । एतदनन्तरमेव सियाम् (इदानीन्तनं थाईल्याण्ड्) मलयदेशस्य उपरि आक्रमणम् अकरोत् । तदा महासूर्याः एकः एव पुत्रः परिवारस्य अन्ये सदस्याश्च फुकेटं प्रतिगतवन्तः । इदानीं मलेषिया ऐषायाः वैभवपूर्णं स्वागतम् अकरोत् । राष्ट्रस्य पक्षतः तस्याः क्षमायाचनं कृत्वा तस्यै देशस्य नागरिकत्वं, वासगृहम्, उद्योगं चापि अयच्छत् । यदा सा द्वीपस्थं महसूर्याः शवस्मारकस्य समीपं गतवती तदा तु अन्धश्रद्धया उन्मत्ताः जनाः तां परितः सम्मिलिताः ।

* * * * * *



स्वीडन् - 
अधीनम् अभवत् ।
तथापि जनानां तु डेन्मार्केण सह
भावनात्मकः सम्बन्धः आसीत् । अतः
देशयोः मध्ये सेतुः निर्मातव्यः इति ते शताधिक-
वर्षेभ्यः अनुरोधं कुर्वन्ति स्म । देशद्वयस्य सर्वकाराभ्यां
निर्णयस्वीकारार्थम् अनेकवर्षात्मकः दीर्घः कालः स्वीकृतः ।
चतुर्भ्यः वर्षेभ्यः पूर्वं सेतोः निर्माणकार्यम् आरब्धम् । स्ट्रैट् आफ् ओरेसण्ड्
- उपरि निर्मितः एषः सेतुः दक्षिणस्वीडन्प्रान्तस्य म्याल्मोफ्नगरस्य डेन्मार्क्देशस्य
राजधान्याः कूपन्हेगन्नगरस्य च सम्पर्कं कल्पयति । उद्घाटनावसरे सहस्राधिकाः अत्युत्सुकाः
प्रेक्षकाः सेतोः अन्तद्वयेऽपि सम्मिलिताः आसन् ।



# संस्थापक-प्रकाशकः आशंसति...



यदा 'चन्दमामा' आरब्धा तदा भारतस्य स्थितिः अन्या एव आसीत् । प्रकाशकाः विरलाः आसन् । बालानां मासिकी तु न आसीत् एव एका अपि । मुद्रणक्रमः (एकैकम् अक्षरं हस्तेन संयोज्यते स्म तदा) आधुनिकतान्त्रिककौशलस्य सर्वथा अनभिज्ञः आसीत् । आधुनिककाले दृश्यमानानि दूरदर्शन-सङ्गणकादीनि न आसन् तदा ।

किन्तु भारतं स्वजीवनस्य नवाध्यायं प्रविशत् आसीत् । आंग्लशासनतः मुक्तिं प्राप्य स्वावलम्बिताम् अवलम्बत् आसीत् ।

दिवङ्गतस्य चक्रपाणेः मम च विश्वासः आसीत् यत् बालानां मुखे मन्दहासः उत्पन्नः चेदेव भारतस्य मुखम् अपि हासयुक्तं भविष्यति, भारतीयाः बालाः स्वस्य श्रेष्ठां परम्परां साभिमानं यदा स्मरन्ति तदा एव भारतं शक्तिशालिराष्ट्रं भविष्यति इति । 'भारतीयबालाः श्रेष्ठसाहित्यस्य परिचयं प्राप्य भारतीयभावनया ओतप्रोताः भवन्तु' इति उद्देशेन चन्दमामा-प्रकाशनरूपं साहसकार्यम् आरब्धम् ।

चन्दमामा विविधाभिः भाषाभिः अखण्डं भावं प्रकाशयन्ती, विकसितात्मनाम्, भारतीयाख्यानानां, पौराणिककथानां, जानपदसाहित्यस्य च 'समृद्धं भाण्डागारं' जाता ।

चन्दमामायाः जनप्रियता गच्छता कालेन प्रवृद्धा । जीवनसहजान् उन्नत्यवनत्यादीन् पश्यन्ती सा विकासं गता । अचिरात् एव सा अतिमहतीं विपदं वर्षात् अधिककालं यावत् सम्मुखीकृतवती । तदवसरे चन्दमामाप्रकाशनं स्थगितम् आसीत् । किन्तु तत्काले अपि तस्याः पृष्ठभूमिकायाम् अदम्या सद्भावना जागर्ति स्म । सा एव चन्दमामां पुनरुज्जीविताम् अकरोत् । तत्काले ये पुण्यात्मानः पङ्कमग्नं रथचक्रं हस्तावलम्बनेन उन्नीय लक्ष्यमार्गे प्रतिष्ठापितवन्तः ते सर्वे कृतज्ञतापूर्वकं स्मर्यन्ते मया ।

मम तु इदानीं द्विविधः सन्तोषः । प्रथमः तावत् चन्दमामाप्रकाशनं ५३ तमे वर्षे पदं स्थापितवत् अस्ति इति । द्वितीयः तु - अल्पकालिकीं सम्मूर्च्छाम् अतिक्रम्य नवशक्त्या युक्ता सती चन्दमामा पुनरुत्थिता अस्ति इति ।

चन्दमामायाः सफलतायाः हेतुभूताः वाचकाः, शुभचिन्तकाः, संरक्षकाः च साभिमानं सकार्तज्ञ्यं च स्मर्यन्ते मया ।

**- बि. नागिरेड्डी**



# वेताल-कथा

## परन्धामस्य मोक्षप्राप्तिः

आरब्धं कार्यं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य मौनेन यथापूर्वं श्मशानाभि-मुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! केचन तादृशाः अलसाः भवन्ति यत् लघुवस्तु अपि उन्नीय पार्श्वे स्थापयितुं न इच्छन्ति । तादृशेन जीवनेन एव तुष्यन्ति ते । किन्तु भवान् तु घोरे मध्यरात्रे एतस्मिन् श्मशानमार्गे सञ्चारतः सन्तोषम् अनुभवन् अस्ति । भवतः एतादृशस्य



प्रयत्नस्य लक्ष्यं किञ्चन स्यात् एव । किन्तु तस्य लक्ष्यस्य सिद्धिसमये भवान् परन्धामः इव अविवेकितां न दर्शयेत् खलु ? भवतः विवेकस्य उद्बोधनार्थं तस्य परन्धामस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

कस्मिंश्चित् ग्रामे परन्धामः नाम युवकः निवसति स्म । तस्य बन्धुबान्धवाः न आसन् । सः श्रमशीलः सन् अपि निर्धनः । प्रतिदिनं सः महता परिश्रमेण कार्यं करोति स्म । तथापि अल्पा भृतिः एव प्राप्यते स्म तेन । अतः जीवननिर्वहणे कष्टम् अनुभवति स्म सः । एतादृशजीवनात् जुगुप्सितः सः कदाचित् अरण्यं गत्वा तपः आरब्धवान् । तस्य कठोरतपस्यां दृष्ट्वा सन्तुष्टः भगवान् प्रत्यक्षीभूय - 'अपेक्षितं वरं याचताम्' इति अवदत् ।

''प्रभो ! मुक्तिदानेन माम् अनुगृह्णातु कृपया । जीवनमरणरूपात् एतस्मात् चक्रात् मम मोक्षः भवतु'' इति निवेदितवान् परन्धामः ।

तदा भगवान् मन्दहासपूर्वकं - ''वत्स ! स्वयं सुखेन जीवन् अन्येषां साहाय्यं करोतु मानवः इति उद्देशेन जन्तुभ्यः मानवजन्म दीयते । भवता तु स्वयं सुखेन न जीवितम् । न वा परोपकारः कृतः । अतः मोक्षप्राप्त्यर्थं भवतः योग्यता नास्ति । किन्तु मोक्षः न दीयते एव इति न । अहं भवते काश्चन अपूर्व-शक्तीः दास्यामि । तासां साहाय्येन भवान् परोपकारं करोतु । तदा भवतः जीवनस्य सार्थकता सिद्धा भविष्यति । ततः भवान् मोक्षस्य अधिकारी भविष्यति । अतः मोक्षाधिकारसिद्ध्यर्थं मानवसेवां करोतु'' इति उक्त्वा ततः अन्तर्हितः अभवत् ।

लौकिके कस्मिंश्चित् अपि वस्तुनि परन्धामस्य आसक्तिः न आसीत् । सः शीघ्रातिशीघ्रं मोक्षं प्राप्तुम् इच्छति स्म । अरण्यतः प्रत्यागमनसमये तेन कश्चन तरुणः दृष्टः । सः अधोमुखतया स्थित्वा हस्त-साहाय्येन सञ्चरति स्म । परन्धामः तं दृष्ट्वा आश्चर्यम् अनुभवन् तस्य कारणं पृष्टवान् ।

''मम पिता केनचित् घोरव्याधिना पीडितः अस्ति । औषधोपचारः कोऽपि लाभप्रदः न जातः । अस्माकं ग्रामस्य अर्चकः वदति यत् दुष्टशक्तिः काचित् तस्मिन् आविष्टा अस्ति इति । यदि प्रतिदिनम् एवं हस्ताभ्यां सञ्चारः



क्रियते तर्हि व्याधिः अपगच्छेत् इति अभिप्रैति सः । अतः अहम् एवं सञ्चरन् अस्मि'' इति अवदत् सः तरुणः ।

''किम् एवं हस्ताभ्यां चलनेन भवता कष्टं न अनुभूयते ?'' इति अपृच्छत् परन्धामः ।

''अनुभूयते एव । महत् कष्टम् अनुभूयते । अन्यच्च आ बाल्यात् मम वामः हस्तः शक्तिहीनः । वैद्यः उक्तवान् अस्ति यत् तस्य वामहस्तस्य उपरि बलम् आरोप्यते चेत् सः सर्वथा निरुपयोगी भवेत् इति । तथापि न कापि चिन्ता मम । यतः हस्तात् अपि पितुः प्राणाः प्रियतराः मम । यदि पिता स्वस्थः भवेत् तर्हि एव महान् आनन्दः मम'' इति अवदत् सः तरुणः ।

युवकस्य परोपकारशीलतां दृष्ट्वा सन्तुष्टः परन्धामः अवदत् - ''भवान् कश्चन श्रेष्ठः पुरुषः । भवतः पुण्यम् एव भवन्तं, भवत्पितरं च रक्षिष्यति । अतः भवान् एतत् हस्त-साहाय्येन चलनं परित्यज्य सन्तोषेण गृहं गच्छतु । मम वचनं व्यर्थं न भवति'' इति ।

तदा युवकः पादाभ्यां स्थित्वा अवदत् - ''श्रीमन् ! भवता मम गृहम् आगत्य मत्पित्रे दर्शनं दातव्यम् इति अहं प्रार्थये'' इति ।

''अहं कस्यापि गृहं गत्वा सत्कारसेवादिकं प्राप्तुं न इच्छामि'' इति अवदत् परन्धामः ।

''आर्य ! अल्पाः वयं महात्मनः भवतः कं वा सत्कारं कर्तुं शक्नुयाम ? भवान् मम पितुः समीपम् आगच्छेत् चेत् मद्ग्रामीणाः अपि केचन भवद्दर्शनं प्राप्य कष्टनिवारणं प्राप्तुम् अर्हन्ति'' इति अवदत् तरुणः ।

''अस्तु तर्हि । जनानाम् उपकारः ममापि प्रियः एव'' इति उक्तवान् परन्धामः ।

अनन्तरं सः शान्ततया तिष्ठन् नेत्रे निमील्य हृत्पूर्वकं भगवन्तं स्मृत्वा प्रार्थयत् - ''प्रभो ! अहं निःस्वार्थभावनया परोपकारं कृतवान् अस्मि । कृपया मह्यं मोक्षं ददातु'' इति ।

''भवता कृतः उपकारः अल्पः । इतोऽपि महतः उपकारान् कृतवन्तः बहवः सन्ति । तेभ्यः एव मया मोक्षः न दत्तः । एवं स्थिते का कथा भवतः ? भवतः पुरतः स्थितः युवकः अपि भवत्तः अधिकं परोपकारं कृतवान् एव । अतः आदौ प्रपञ्चम् अवगच्छतु भवान्'' इति हृदयतः ध्वनिः श्रुतः ।

''एतस्य परोपकारः कथं श्रेष्ठः ?'' इति आश्चर्येण अपृच्छत् परन्धामः ।

''यदा तत् भवता ज्ञायते तदा एव मोक्षः

भवतः । इदानीं तु तम् अनुसरतु भवान्'' इति आदिशत् भगवान् ।

भगवतः आदेशस्य अनुगुणं परन्धामः तम् अनुसृतवान् । यावत् तौ गृहं प्राप्तवन्तौ तावता युवकस्य पिता स्वस्थः जातः आसीत् । युवकः ग्रामीणान् सर्वान् उक्तवान् यत् एतस्य महात्मनः आशीर्वादतः एव मम पितुः व्याधिः अपगतः इति । एतत् श्रुत्वा जनाः परन्धामस्य दर्शनार्थम् अहमहमिकया आगताः । स्वकष्टानि निवेद्य ते परिहारं प्रार्थितवन्तः ।

कश्चित् व्याधिग्रस्तः । अपरः ऋणभार-त्रस्तः । अन्यः पत्नीपीडितः । एका श्वश्रू-पीडिता । अपरा स्नुषापीडिता । अन्या दारिद्र्यपीडिता । एकस्य कूपे जलं नास्ति । अपरस्य क्षेत्रं शुष्कम् । अन्यस्य धान्याभरणादिकं चोरितम् । परन्धामः सर्वेषां समस्यां सश्रद्धं श्रुत्वा भगवता दत्तायाः शक्त्याः साहाय्येन सर्वाः समस्याः निवारितवान् । ग्रामे समस्या एव न अवशिष्टा । ग्रामः, स्वर्गतुल्यः जातः ।

तस्मिन् ग्रामे रङ्गः नाम कश्चन बलशाली आसीत् । तस्य साहाय्यं प्राप्य धनिनः निर्धनान् पीडयन्ति स्म । इदानीं ग्रामे समस्या एव न अवशिष्टा इत्यतः रङ्गः कार्यरहितः जातः । कोऽपि तेन सह वार्तालापं न करोति स्म ।

एतस्मात् रङ्गः नितरां विरक्तः जातः । सः परन्धामसमीपं गत्वा - ''श्रीमन् ! अहं दुष्टः अस्मि । जनाः बहुधा पीडिताः मया । इदानीं पूर्वतनं सर्वं स्मरामि चेत् महान् विषादः प्राप्यते । एतस्य परिहारः तु मोक्षप्राप्तितः एव । अतः कृपया मह्यं मोक्षं ददातु'' इति निवेदितवान् ।

''मित्र ! धनम्, आभूषणं, गृहं, वाहनं वा याचतु । दास्यामि । अन्यस्मिन् ग्रामे सुखेन जीवनं कर्तुं यथा शक्येत तथा अपि वरं दद्याम् । किन्तु मोक्षं तु दातुं न शक्नोमि''



इति अवदत् परन्धामः ।

''अन्यस्मिन् ग्रामे वासः कृतः चेदपि मदीया पूर्वतनी प्रवृत्तिः उद्बुद्धा न भवेत् इत्यत्र कः विश्वासः? पुनः अहं जनान् पीडयेयम् । अतः किं जीवितेन ? मम पाप-मयजीवनस्य मुक्तिः एव अन्तिमपरिहारः । महात्मनः भवतः कृपातः एव मोक्षप्राप्तिः भवेत्'' इति पादस्पर्शपूर्वकम् उक्तवान् रङ्गः ।

''अस्तु, विचिन्त्य वदिष्यामि । श्वः भवान् मिलतु'' इति असूचयत् परन्धामः ।

रङ्गस्य निर्गमनानन्तरं परन्धामः ध्यानमग्नः जातः । तदा भगवान् असूचयत् - ''स्वस्य मोक्षस्य प्राप्तेः इच्छा परित्यक्ता चेदेव भवान् रङ्गाय मोक्षं दातुम् अर्हति'' इति ।

अनन्तरदिने रङ्गम् अवदत् परन्धामः - ''अहं मम पुण्यं भवते यच्छामि । भवान् नद्यां स्नात्वा भगवन्तं ध्यात्वा मोक्षं याचतु । भगवान् भवते मोक्षं दास्यति'' इति ।

रङ्गाय मोक्षं दत्त्वा भगवान् परन्धामस्य पुरतः प्रत्यक्षीभूय - ''भवते मोक्षं दास्यामि'' इति अवदत् ।

''मम पुण्यसञ्चयः नष्टः । रङ्गाय पुण्यं प्रदत्तं मया । अतः मोक्षप्राप्त्यधिकारः नास्ति मम'' इति अवदत् परन्धामः ।

''भवतः कर्तव्यं समाप्तम् अस्ति । अतः अद्य सायङ्काले भवान् नद्यां स्नात्वा मां ध्यायतु । भवता मोक्षः प्राप्यते'' इति उक्तवान् भगवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! मोक्षप्राप्त्यर्थं परन्धामः भगवन्तं बहुधा प्रार्थितवान् । किन्तु भगवता मोक्षदानं निराकृतम् । किन्तु यदा भगवता मोक्षं दातुम् उद्युक्तं तदा परन्धामः तस्य स्वीकृतौ असम्मतिं दर्शितवान् । किमर्थम् एवं कृतं तेन ? मोक्षः सुलभलभ्यः न इति सः जानाति स्म एव खलु ? मोक्षं प्राप्तुं महात्माभिः अपि



शताधिकवारं जन्म प्राप्तव्यं भवति । तादृशं दुर्लभं मोक्षं दुष्टाय रङ्गाय किमर्थं दत्तवान् परन्धामः ?

किमर्थं विवेकहीनः इव व्यवहृतवान् सः ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''परन्धामः मोक्षस्वीकारं निराकृतवान् यत् तस्य कारणं त्यागः परोपकारश्च, न तु अविवेकः । भगवता दत्तां शक्तिं सः आधिक्येन जनसेवार्थम् उपयोक्तुम् इष्टवान् । जनसेवार्थम् एव भगवता तस्मै अपूर्वा शक्तिः दत्ता आसीत् । जनसेवा एव जनार्दनसेवा इति परन्धामः जानाति स्म । अतः एव सः चोराय रङ्गाय स्वस्य पुण्यं समर्प्य तं मोक्षयोग्यं कृत्वा तस्मै मोक्षं दापितवान् ।

भगवद्दर्शनतः पूर्वं तस्मिन् अज्ञानम् आसीत् । सः जीवनं भारभूतं भावयति स्म । अतः एव ततः दूरगमनार्थं सः मोक्षम् इष्टवान् । यदि तेन तत्काले मोक्षः प्राप्तः स्यात् तर्हि अपि विशेषलाभः तु न जातः स्यात् । यतः तस्य आत्मा, मनः, प्राणशक्तिः च पक्वं न आसीत् ।

रङ्गाय तेन मोक्षः दापितः यत् तदपि विवेकपूर्णम् एव अस्ति । रङ्गे वास्तविकः पश्चात्तापः उदितः आसीत् । सः स्वस्य जीवनं परिवर्तयितुम् इच्छति स्म । तस्मिन् उदितं वैराग्यं वास्तविकम् । किन्तु तस्मिन् जन्मनि कृतानां पापकर्मणां कारणतः सः अनधिकारी जातः । अतः तस्मै स्वस्य पुण्यं दत्त्वा तं मोक्षाधिकारिणं कृतवान् परन्धामः ।

एतस्य अपूर्वस्य निःस्वार्थभावनाप्रेरितस्य कर्मणः कारणतः परन्धामस्य आत्मा निर्मलः परिशुद्धः च जातः । तदीयं कर्तव्यं समाप्तम् आसीत् । अतः तस्मै मोक्षः दत्तः भगवता ।

परन्धामस्य व्यवहारे किमपि अनौचित्यम् अविवेकिता वा नास्ति । अतः भवतः सन्देहः निराधारः अज्ञानद्योतकः च'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



कावेरी तीरे स्थितम् अपरं प्रमुखनगरं कुम्भकोणम् । ततः पूर्वं कञ्जनूरु तिरुविसवल्लूरु इत्येते नगरे स्तः । कञ्जनुरुनगरं हस्तनिर्मितशाटिकानां निमित्तं विख्यातम् आसीत् । तिरुविसवल्लूरुनगरं तु प्रसिद्धस्य व्यङ्ग्यचित्रकारस्य विकटम् रामस्वामिशास्त्रिवर्यस्य, प्रसिद्धस्य समाजसेवकस्य श्रीधर-अय्यवर्यस्य (अरयावल् इति तस्य नामान्तरम्) निवासस्थानम् आसीत् । श्रीधरार्यः तिरुविसनल्लुरुनगरे स्वस्य भक्तिपूर्णम् आध्यात्मिकं जीवनं यापयितुम् इच्छन् मैसूरुसंस्थानस्य मन्त्रिपदम् अपि परित्यक्तवान् । तस्य करुणा मानवीयता च अपूर्वा एव आसीत् । अधोनिर्दिष्टा कथा तस्य मानवीयतां प्रमाणयति ।

---

## कावेरीतीरप्रयाणम् - १०
## दक्षिणभारतीया वाराणसी

- *वर्णनम्* - जयन्ती महालिङ्गम्
- *चित्रम्* - गौतमसेनः

---

एकदा सः मातुः श्राद्धसंस्कारं कुर्वन् नदीतीरे एकं निर्धनं हरिजनं दृष्टवान् । सः हरिजनः कृशकायः, जीर्णशरीरः, नितरां बुभुक्षितः च परिलक्ष्यते स्म । एतत् दृष्टवतः श्रीधरार्यस्य हृदयं करुणारसेन पूर्णं जातम् । सः झटिति गृहम् आगत्य गृहे श्राद्धार्थं यः पाकः सज्जीकृतः आसीत् ततः कञ्चित् भागं तस्मै नीत्वा दत्तवान् । एतस्मात् ब्राह्मणाः कुपिताः । ते श्राद्धविधेः निर्वर्तनं निराकृतवन्तः । श्रीधरार्यः मौनेन तेषां निर्गमनं पश्यन् स्थितवान् । तेषां निर्गमनस्य अनन्तरं सः ब्राह्मणानां स्थाने दूर्वाः एव अभिमन्त्र्य श्राद्धसंस्कारं स्वयं निर्वर्तितवान् ।

कुम्भकोणं 'दक्षिणभारतीया वाराणसी' इति निर्दिश्यते । कावेर्याः दक्षिणतीरे स्थितम् एतत् नगरं सुविशालं सुसमृद्धं च अस्ति । सहायकनदी अरासलारनदी अत्र कावेर्यां मिलति । आ नवमशतकतः आर्थिक-धार्मिक-सांस्कृतिककेन्द्रत्वेन कुम्भकोणं प्रसिद्धम् अस्ति । अत्र कौशेयवस्त्राणां कार्पासवस्त्राणां च निर्माणं प्राधान्येन प्रचलति । कांसपित्तलपात्रादीनां निर्माणं, सुवर्णाभरणानां सज्जीकरणं चापि अत्र महता प्रमाणेन प्रचलति । अत्रत्याः कलाविद्यालयाः बहूनां



*आदि-कुम्भेश्वर-मन्दिरम्*




चित्रकाराणां, कलाकाराणां च निर्माणं कृतवन्तः सन्ति। सौराष्ट्रतः, आगताः कुशलकर्मिणः अत्र शाटिकासु सुवर्णवर्णतन्तुं योजयन्ति। गुजरातीयाः वणिजः महता प्रमाणेन अत्र वसन्ति।

अत्रत्ये सर्वकारीये कलामहाविद्यालये बहवः विद्वांसः अध्ययनम् अध्यापनं च कृतवन्तः। अतः एव कुम्भकोणं 'दक्षिणभारतस्य केम्ब्रिज्' इत्यपि निर्दिश्यते। अत्र मन्दिराणि बहूनि सन्ति। प्रायः षष्ट्यधिकानि मन्दिराणि सन्ति अत्र। अत्रत्या कुलदेवता आदिकुम्भेश्वरः। एतस्य कारणतः एव एतस्य नगरस्य नाम कुम्भकोणम् इति जातम्। कुम्भेश्वरमन्दिरं नगरस्य मध्यभागे अस्ति। लिङ्गोद्भवविषये नगरनिर्माणविषये च काचित् पौराणिकी कथा एवं श्रूयते -

महाप्रलयतः किञ्चित्पूर्वं शिवः ब्रह्मणे सर्वजीवन-हेतुकानि दिव्यबीजानि दत्त्वा उक्तवान् - ''एतानि अमृतमये कुम्भे स्थापनीयानि। बिल्वपत्रैः एतस्य कुम्भस्य पूजा प्रतिदिनं करणीया। प्रलयसमये मेरुपर्वतशिखरे एषः कुम्भः स्थापनीयः'' इति। ब्रह्मणा तथैव कृतम्। प्रलयकाले जले प्लवमानः स च कुम्भः कुम्भकोणे अतिष्ठत्। शिवः तत्र आगत्य बाणप्रयोगेण तं कुम्भं भेदितवान्। कुम्भस्थानि वस्तूनि सर्वत्र विकीर्णानि। महामहिमकुण्डे स्वर्णकमलसरोवरे च अमृतबिन्दवः पतिताः। शिवः सिकताभिः अमृतं मेलयित्वा लिङ्गं निर्मितवान्, स्वयं च तस्मिन् विलीनः जातः। एतत्सर्वं सृष्टेः अदिकाले एव प्रवृत्तम् इत्यतः अयं कुम्भेश्वरः 'आदिकुम्भेश्वरः' इति निर्दिश्यते।

कुम्भकोणे स्थितेषु अतिविशालं मन्दिरम् अस्ति आदिकुम्भेश्वरमन्दिरम्। १००० वर्गमीटर्परिमिते स्थले एतत् प्रसृतम् अस्ति। त्रीणि गोपुराणि एतस्य। सप्तमशतके निर्मितस्य एतस्य मन्दिरस्य प्रशंसा सम्बन्दर-अप्पर-मन्त्रेषु कृता दृश्यते। १६-१७ - शतकयोः अत्र शासनं कृतवन्तः विजयनगरीयाः नायकराजाः अत्र बहूनि मन्दिराणि निर्मितवन्तः। अच्युतप्पनायकस्य मन्त्री गोविन्ददीक्षितः महामहिमकुण्डपरिसरे मण्डपान्, सरोवराणि, कूपान् स्नानघट्टान् च निर्मापितवान्। सः महाविद्वान् दार्शनिकः मानवतावादी च आसीत्। सः अनेकाः निस्स्वार्थसेवाः कृतवान्। अय्यननाम्ना प्रसिद्धेन एतेन मन्त्रिणा निर्मापितम् 'अय्यनकुलसरोवरम्', 'अय्यनथेरु'मार्गम्, 'अय्यनकडयी'विपणीम्, अन्यानि सार्वजनिक-निर्माणानि च अद्यापि सर्वे कृतज्ञतापूर्वकं स्मरन्ति।

कुम्भकोणस्थम् अपरं मन्दिरम् अस्ति - नवमे शतके चोलराजैः निर्मितं नागेश्वरमन्दिरम् । एतत् मन्दिरं चोल-युगारम्भकालिकया मूर्तिकलया, शिल्पकलया च युक्तम् अस्ति । मन्दिरस्य भित्तिषु शिवस्य तथा रामायणस्य कथा-शृङ्खलायाः सुन्दरम् उत्कृष्टं च चित्रम् अस्ति । शिलासु उत्कीर्णानि एतानि चित्राणि अपूर्वाणि सन्ति ।



महामहिमकुण्डम्

चोलसाम्राज्यकाले निर्मितम् एकमात्रं विष्णुमन्दिरम् अस्ति - शार्ङ्गपाणिमन्दिरम् । अत्रत्या मूर्तिः शयनावस्थायाम् अस्ति । मुख्यमन्दिरं रथाकारेण निर्मितम् अस्ति । नायकराजाः अनन्तरकाले द्वादशाट्टात्मकं गोपुरं निर्मापितवन्तः ।

कुम्भकोणतः ५ कि. मी. दूरे दारासुरमनगरे ऐरावतेश्वरमन्दिरम् अस्ति । एतत् अपि रथाकारेण अस्ति । चोलराजैश्च निर्मितम् अस्ति । कलाकाराः स्वस्य स्वप्नान् एकमूर्तिरूपेण अत्र चित्रितवन्तः इव । मुख्यभागः रथाकारकः अस्ति । तं च रथम् अश्वाः आकर्षन्ति । मन्दिरस्य पुरतः स्थिताः स्तम्भाः किञ्चित् ताडिताः चेत् तेभ्यः सङ्गीतस्वराः निर्गच्छन्ति । दारासुरमनगरम् एतत् कदाचित् चोलानां राजधानी अपि आसीत् ।



*ऐरावतेश्वरमन्दिरे दृश्यमानानि चित्राणि*

कुम्भकोणस्य महोत्सवस्य नाम 'महामहम' इति । एषः महोत्सवः उत्तरप्रदेशीया कुम्भमेला इव द्वादशसु वर्षेषु एकवारं प्रवर्तते । जनाः भावयन्ति यत् तस्मिन् काले भारतस्य सर्वाभ्यः नदीभ्यः भूम्यन्तर्गततया एव आगतानि जलानि कावेरीनद्या मिलन्ति इति । एतस्मिन् पवित्रे दिने महामहिमकुण्डे मज्जनार्थं जनाः महता प्रमाणेन अत्र आगच्छन्ति । तस्मिन् दिने जनसम्मर्दः तावान् भवति यत् कुण्डे जलम् एव न दृश्यते, प्रत्युत केवलानि शिरांसि दृश्यन्ते । गते १९९२तमे वत्सरे महामहम-महोत्सवः प्रवृत्तः ।

कुम्भकोणपरिसरे कावेरीतीरे तादृशाः बहवः ग्रामाः सन्ति, येषु तमिळुनाडीयाः बहवः सङ्गीतविद्वांसः जन्म प्राप्तवन्तः, वासं कृतवन्तः वा । ते च केचन - कोट्टैयुर्,

पापानासम्, स्वामिमलै (सुन्दरं कार्तिकेयमन्दिरम् अत्र अस्ति) उमायलपुरम्, कपिलस्थलम् सिरकई इत्यादयः ।



यु. वि. स्वामिनाथन् अय्यर्

कोट्टैयूरुग्रामे आलवाराः नायन्माराः च यथा, तथैव बहवः सङ्गीतविद्वांसः अपि जन्म प्राप्तवन्तः । अत्र जन्म प्राप्तवान् महामहोपाध्यायः यू. वि. स्वामिनाथन् अय्यर्वर्यः (१८५५ - १९४२) सङ्गमकालिकं तमिळुसाहित्यं पुनरुज्जीवितवान् । अयम् अद्यापि 'तमिळुतात'शब्देन (तमिळुभाषायाः पितामहः) निर्दिश्यते । तस्य गुरुः महाविद्वान् टी. पी. मीनाक्षीसुन्दरं पिलैवर्यः महासङ्गीतविद्वान् रचनाकारः च आसीत् । गोपालकृष्णभारती (नन्दनचरितस्य लेखकः), वेदनायकं पिल्लै (प्रथम - तमिळुकथाग्रन्थस्य 'प्रतापन् - मुदलियार् - चरित्रम्' इत्येतस्य लेखकः) इत्यादयः अपि कावेरीतीरे एव वृद्धिं गताः, कावेरीजलम् एव पीत्वा शक्तिं प्राप्तवन्तः । यु. वि. स्वामिनाथन् अय्यर्वर्यः कुम्भकोणमहाविद्यालयस्य व्याख्याता आसीत् बहूनि वर्षाणि यावत् । कुम्भकोणम् - आकाशगङ्गायाः प्रकाशमानं नक्षत्रम् अपि स्मरणीयम् अत्र । तच्च - श्रीनिवासरामानुजम् । तस्य अध्ययनम् अत्रैव प्रवृत्तम् । सः भारतस्य अभूतपूर्वः सुपुत्रः, विश्वस्य महान् गणितज्ञश्च आसीत् ।

### कुम्भकोणतः

अग्रे गता कावेरी तिरुभुवननगरं स्पृशन्ती अग्रे प्रवहति । तत्र सा विशालरूपं प्राप्नोति । तिरुभुवननगरे स्थिते मन्दिरे दृश्यमाना कला अत्यपूर्वा । अत्र गोपुरशिखरे विमानं निर्मितं दृश्यते । एषा एव शैली अग्रे चोलवास्तुकलायाम् अपि अस्माभिः द्रष्टुं शक्या । एतस्य निर्माणं तृतीयकुलोत्तुङ्गस्य (११७८ - १२१८) काले जातम् इति भाव्यते ।

इतः अनतिदूरे तिरुविदैमरुदूरुनगरे महालिङ्गेश्वरमन्दिरम् अस्ति । एतच्च तमिळुनाडुराज्ये स्थितेषु मन्दिरेषु एव अति-विशालम् । अत्र प्राप्यमाणस्य वृक्षविशेषस्य कारणतः एतस्य मन्दिरस्य नाम 'मरुडमरम्' इत्यपि जातम् । एतस्य मन्दिरस्य शिखरम् अत्युन्नतम् अस्ति । अत्रत्यासु भित्तिषु १२०० वर्षप्राचीनाः अभिलेखाः दृश्यन्ते । एतासु उल्लिखितानि प्रशंसावाक्यानि नायन्मार - सम्बदर - अप्पर - मणिक्कावाचागार-प्रभृतीनि इव जनैः भक्त्या गीयन्ते ।



श्रीनिवासरामानुजम्

कावेरीतीरे स्थितम् अपरं स्थानं - मइलाडुथुरै । 'यत्र मयूराः नृत्यन्ति तत् स्थानम्' इति तस्य शब्दस्य अर्थः । लाकूडमघट्टः तलकावेर्याः अनन्तरं प्राप्यमाणं पवित्रस्थानम् । अक्टोबर् - नवम्बरमासयोः सहस्रशः भक्ताः कडैमुखमदिवसे अत्र पवित्रस्नानार्थम् आगच्छन्ति । कावेरीसम्बद्धेषु गीतेषु महाकाव्येषु च 'पट्टिनापलै' यथा तथैव मईलाडुथुरै अपि प्राधान्येन गीयते ।



# सुवर्णसिंहासनम्-८

*[ सुवर्णगिरिराज्यस्य राजकुमारः मलयध्वजः गुरुकुले विद्याभ्यासं कुर्वन् आसीत् । पितुः दुर्मरणं श्रुत्वा सः मित्रेण सिंहगुप्तेन मिलति । राजकुमार्या शालिन्या सह प्रस्थाय गुप्तवेषेण सुवर्णगिरिराजधानीं प्रविशति । तत्र देशभक्तस्य सुकेतोः साहाय्येन वज्रकीर्तेः कन्दर्पस्य च शयनागाररक्षकयोः सम्पर्कं संसाध्य तौ स्वकार्यानुकूलौ विदधाति । तदनन्तरम् ....]*

मलयध्वजः मध्यरात्रे गुरोः साहाय्येन वज्रकीर्तेः शयनागारं प्रविष्टवान् । तत्समये वज्रकीर्तिः गाढनिद्रामग्नः आसीत् । मलयध्वजः सकृत् पादेन प्रहृत्य तम् उत्थापितवान् । पुरतः स्थितं खड्गहस्तं तरुणं दृष्ट्वा वज्रकीर्तिः आश्चर्यचकितः भीतः च । आक्रन्दनं कर्तुम् उद्यतस्य तस्य मुखं हस्तेन बलात् पिधाय मलयध्वजः – ''भवान् कापट्येन व्यवहरन् निद्रामग्नौ मम मातापितरौ संहृत्य राज्यं वशीकृतवान् । अहं तु न तथा । भवन्तं जागरय्य प्रवर्तमानं भवान् यथा अवगच्छेत् तथा कृत्वा भवन्तं यमपुरीं प्रेषयामि'' इति उक्त्वा खड्गं वज्रकीर्तेः उरसि प्रवेशितवान् ।

तस्मिन् एव समये वीरस्य साहाय्येन विश्वासघातकस्य सेनापतेः कन्दर्पस्य शयनागारं प्रविष्टवती पुरुषवेषधारिणी शालिनी । तम् उत्थाय भीत्या आश्चर्येण च पश्यतः तस्य शरीरे विषसूचीं योजयित्वा तं मारितवती सा ।

वज्रकीर्तिं यमपुरीं प्रेषयित्वा गुरुणा सह मलयध्वजः कन्दर्पस्य शयनागारं प्रति गच्छन् आसीत् । तावता शालिनी एव अभिमुखम्



सर्वे भवन्तः विशेषजागरूकतां वहन्तः रक्षणकार्यं कुर्वन्तु'' इति ।

तदनन्तरं मलयध्वजः कारागारं प्रति गतवान् । तत्रत्यम् अधिकारिणम् उक्तवान् च - ''अहं राजकुमारः मलयध्वजः अस्मि । कन्दर्पः वज्रकीर्तिः च मरणं प्राप्तवन्तौ । मन्त्रिणं राजभक्तान् सेनाधिकारिणः च बन्धविमुक्तान् कर्तुम् अहम् आगतः अस्मि'' इति । तस्य आज्ञां शिरसा वहन् कारागाराधिकारी मन्त्रिणं सेनाधिकारिणः च कारागारात् विमुक्तवान् ।

''मन्त्रिवर्य ! पुनरपि भवता राज्यसञ्चालन-भारः वोढव्यः इति मम नम्रं निवेदनम् । शासनमार्गे स्थितानि सर्वाणि कण्टकानि उन्मूलितानि सन्ति । कन्दर्पः वज्रकीर्तिः च यमलोकं गतवन्तौ । श्वः प्रातः नूतनराजस्य घोषणं करणीयम् । एतावता अपि कन्दर्प-वज्रकीर्त्योः मरणस्य वार्ता प्रासादात् बहिः गता नास्ति । इतःपरं यथोचितं निर्णेतव्यं भवता'' इति मन्त्रिणं सादरं नमस्कुर्वन् उक्तवान् मलयध्वजः ।

''साधु मलयध्वज ! भवान् उपायेन प्रतीकारं साधितवान् । पितुः राज्यं प्रति-प्राप्नुवन् अप्रतिमं राजनैतिककौशलं प्रदर्शितवान् चापि । इतःपरं यद्यत् करणीयं तत्सर्वम् अहं चिन्तयिष्यामि । तदस्तु, भवता सह स्थितः अयं युवकः कः ?'' इति अपृच्छत् मन्त्री शालिनीं दर्शयन् ।

''तत् पुनः कदाचित् वक्ष्यामि । तदर्थं न अयं समयः । इदानीं मया किं करणीयम् इति आदिशतु'' इति अवदत् मलयध्वजः ।

आगत्य संज्ञाक्रमेण सूचितवती यत् कार्यं यशस्वितया सम्पन्नम् इति ।

मलयध्वजः वीरम् आज्ञापितवान् यत् सर्वे रक्षकभटाः झटिति अत्र मेलनीयाः इति । वीरः भक्त्या ताम् आज्ञां पालितवान् । तान् उद्दिश्य स्वपरिचयं ज्ञापयित्वा मलयध्वजः अवदत् - ''इदानीम् एतस्य देशस्य राजा अहम् एव अस्मि । विश्वासघातकः सेनापतिः कन्दर्पः कपटव्यवहारवान् वज्रकीर्तिः च यथायोग्यं दण्डनं प्राप्तवन्तौ । तयोः पापघटः पूर्णः आसीत् । अतः तौ इदानीं मृत्यु-लोकातिथी जातौ । मम अनुज्ञां विना अद्य रात्रौ कोऽपि प्रासादं यथा न प्रविशेत् तथा जागरूकतया रक्षणकार्यं करणीयं भवद्भिः । एषा रात्रिः नितरां भयावहा अस्ति । अतः

''इदानीं विश्रान्तिं स्वीकरोतु भवान् । प्रातः सप्तवादने सभाभवने उपस्थातव्यम् भवता'' इति अवदत् मन्त्री ।

अनन्तरं सः कारागारात् मुक्तान् सर्वान् सेनाप्रमुखान् मेलयित्वा अवदत् - ''अस्माकं राजकुमारः विना रक्तपातं राज्यं स्ववशीकृतवान् अस्ति । श्वः प्रातः सप्तवादने तस्य पट्टाभिषेकः प्रचलेत् । प्रातः पञ्चवादने पट्टाभिषेकवार्ता प्रसारणीया । एतस्मिन् आनन्दोत्सवे प्रजाः अपि सन्तोषेण भागं वहन्तु नाम'' इति ।

प्रातः वज्रकीर्तेः कन्दर्पस्य च मरणवार्ता प्रसारिता । युवराजस्य मलयध्वजस्य पट्टाभिषेकवार्ता अपि घोषिता । एतेन प्रजाः आनन्दतुन्दिलाः जाताः ।

सिंहासनम् आरूढः मलयध्वजः गुरुं सुवर्णनाणकादिदानेन सत्कृतवान् । वीरम् आहूय उक्तवान् च - ''भवान् दुष्टस्य विश्वासघातकस्य जनस्य साहाय्यम् आचरितवान् । विषयुक्तः कीटः इव अपायकरः भवान् । राजोद्योगे भवादृशाः भवितुं न अर्हन्ति । तथापि मया भवतः साहाय्यं प्राप्तम् इत्यतः प्राणदानं क्रियते । अद्य आरभ्य राजोद्यानरक्षणकार्यं करणीयं भवता'' इति ।

ततः सः सुकेतुं राजभवनं प्रति भोजनार्थं निमन्त्रितवान् । कृतज्ञतां प्रकटयन् तम् उक्तवान् - ''अपायकाले अपि भवता मित्रवत् व्यवहारः कृतः । अतः भवान् मम बन्धुः इव । इतःपरं राजभवने ये ये उत्सवाः प्रचलिष्यन्ति तेषु सर्वेषु भवान् सम्मान्यातिथिरूपेण भागं वहेत्'' इति ।



सप्ताहानन्तरं मलयध्वजः भिल्लराजं सिंहगुप्तं सपरिवारं निमन्त्र्य शालिनीपरिणयप्रस्तावम् उपस्थापितवान् । एषः प्रस्तावः सिंहगुप्तस्यापि प्रियः एव आसीत् । अतः सः आनन्देन अनुज्ञां दत्तवान् । शुभे मुहूर्ते शालिनी-मलयध्वजयोः विवाहः यथाविधि सवैभवं सम्पन्नः । ततः तौ दम्पती प्रजाहितकार्ये आत्मानं नियोजितवन्तौ ।

द्वितीया सालभञ्जिका एवं कथां समाप्य अवदत् - ''विजयदत्त ! शालिनी अन्ये त्रयः च मलयध्वजस्य साहाय्यं कृतवन्तः । तेषु कस्यचित् वा साहाय्यं यदि न स्यात् तर्हि राज्यस्य प्रतिप्राप्तिः निश्चयेन क्लेशाय अभविष्यत् । ते त्रयः अपि तस्य प्रजाः एव । त्रयाणाम् अपि साहाय्यं समानम् । तथापि



भवान् शक्नुयात् तर्हि एव स्वर्णसिंहासनस्य द्वितीयं सोपानम् आरोढुं शक्नुयात् । यदि भवान् असफलः स्यात् तर्हि सर्वेषु पश्यत्सु एव, सिंहासनम् अदृश्यतां गमिष्यति'' इति ।

तदा विजयदत्तः अवदत् - ''हे धर्म-स्वरूपिणि देवि ! तेषां त्रयाणां विषये मलयध्वजस्य व्यवहारे असमानता या दृश्यते तस्याः कारणं तदीयम् अज्ञानं पक्षपातबुद्धिः वा न, प्रत्युत राजधर्मपरिज्ञानम् । मलयध्वजः राजधर्मस्य सूक्ष्मांशान् सम्यक् जानाति स्म । तत्तस्य जनस्य अन्तश्चेतनायाः बुद्धिमत्तायाः च स्तरं मनसि निधाय सः व्यवहृतवान् । ते त्रयः तं येन क्रमेण स्वागतीकृतवन्तः तम् अवलम्ब्य सः व्यवहृतवान् ।

वीरः अधमस्तरीयः । सः राजद्रोही नीचः कुटिलः च । अनन्यगतिकतया सः राज-कुमारस्य साहाय्यकरणम् अङ्गीकृतवान् । वस्तुतः सः दण्डनार्हः । अनन्यगतिकतया वा तेन मलयध्वजस्य उपकारः कृतः आसीत् एव । अतः मलयध्वजः मरणदण्डनात् तं मुक्तं कृतवान् । एषा एव तेन दर्शिता कृपा ।

गुरुः अपि रक्षकः एव । किन्तु सः राज-भक्तिमान् । सः मध्यमस्तरीयः नागरिकः । सः हृत्पूर्वकं राजकुमारस्य साहाय्यं कृतवान् । यद्यपि सः निर्धनः तथापि राजकुमारतः अनुचितरूपेण धनं प्राप्तुं न इच्छति स्म । एतादृशानां जीवने धनदानस्य महत्त्वपूर्णं स्थानं भवति । उपायनरूपेण प्रीत्या धनं दत्तं चेत् नितरां तृप्ताः भवन्ति ते । ततोऽप्यधिकं किमपि प्राप्तुं न इच्छन्ति ते । अतः एव मलयध्वजः तस्मै असङ्ख्यानि सुवर्णनाणकानि

कृतज्ञताप्रकाशनावसरे मलयध्वजः किमर्थं तारतम्यं प्रदर्शितवान् ?

गुरवे तु सः स्वर्णनाणकानि दत्तवान् । किन्तु सुकेतुं तु विशेषतः सत्कृत्य स्वजनप्रीतिं दर्शितवान् । वीरेण तु न धनं प्राप्तं, न वा सम्मानः । प्रत्युतः निम्नस्तरीये कार्ये नियुक्तिः प्राप्ता तेन । एतत् तु निश्चयेन अपमानाय । मलयध्वजेन एतादृशः पक्षपातः किमर्थं कृतः ? किं सः अज्ञानवशात् एतादृशम् अपमाननं कृतवान्, उत सोद्देशम् ? किं तस्य व्यवहारस्य पृष्ठभूमिकायां राजधर्मांशः कोऽपि अस्ति ? यदि मलयध्वजस्य स्थाने भवान् स्यात् तर्हि भवतः निर्णयः किम् एतादृशः एव अभविष्यत्, उत अन्यः ?

यदि एतेषां प्रश्नानाम् समुचितम् उत्तरं दातुं

दत्त्वा तदीयं दारिद्र्यं निवारितवान् । गुरोः यः स्तरः तदनुगुणम् एव उपायनं दत्तवान् आसीत् सः ।

सुकेतुः उत्तमस्तरीयः जनः । राजभक्तिः तस्य सहजः गुणः आसीत् । राजभवने यद्यत् प्रवृत्तं तस्य सर्वस्य औचित्यानौचित्यज्ञानम् आसीत् तस्य । मातृभूमिहितार्थं सः सर्वस्वम् अपि समर्पयितुं सिद्धः । कन्दर्पस्य विश्वास-घातुकतां दृष्ट्वा सः क्रुद्ध्यति, किन्तु एकाकितया किमपि कर्तुं न शक्यते इत्यतः मौनम् अवलम्बते । यदा मलयध्वजः उपस्थितः तदा सः ससन्तोषं साहाय्यं कर्तुम् उद्युक्तः । मलयध्वजस्य योजनायाः क्रियान्वयने प्रमुखं पात्रं वोढुं सः सिद्धः जातः । सः मलयध्वजं स्वजनं मत्वा स्वगृहे तस्य वासव्यवस्थाम् उपकल्पितवान् । अतः एव मलयध्वजः अपि तं स्वजनं मत्वा सम्मानितवान् । एतादृशः सम्मानः विशिष्ट-जनैः एव प्राप्तुं शक्यः । नितरां दुर्लभः अयं धनात् अपि श्रेष्ठतरः । सोऽयं सम्मानः सुकेतुना प्राप्तः आसीत् । स च सुकेतोः स्तरानुगुणम् एव आसीत् । तं प्राप्य सुकेतुः सन्तुष्टः अभवत् ।

एवं मलयध्वजस्य व्यवहारः असमानोऽपि तत्तस्य जनस्य स्तरानुगुणः तु आसीत् एव । उत्तमः राजा एव एतादृशं व्यवहारनैपुण्यं दर्शयितुम् अर्हति, न अन्यः । राजधर्मस्य श्रेष्ठम् उदाहरणम् एतत् एव । मलयध्वजस्य स्थाने यदि अहं स्यां, तर्हि अहम् अपि एवम् एव निर्णयम् अकरिष्यम्'' इति ।

विजयदत्तस्य उत्तरं श्रुत्वा द्वितीया



सालभञ्जिका सन्तोषेण अवदत् – ''साधु युवराज ! साधु ! अभिनन्दनानि भवतः । उत्तमराजस्य व्यवहारम् एव प्रतिपादयति भवतः उत्तरम् । इदानीं भवान् द्वितीयं सोपानम् आरोढुम् अर्हति । स्वागतं भवतः'' इति ।

सालभञ्जिकया व्याहृतं स्वागतवचनं श्रुत्वा सभासदः सर्वे महता आनन्देन करताडनं कृतवन्तः । मङ्गलवाद्यानां नादः तत्र सर्वत्र व्याप्तः । विजयदत्तः प्रसन्नां मुखमुद्रां वहन् द्वितीयसोपानम् आरूढवान् ।

तदा तृतीया सालभञ्जिका अवदत् – ''युवराज, विजयदत्त ! अहं न्यायस्वरूपा इति भवता ज्ञातम् एव अस्ति एतावता । अहं न्यायवर्धननामकस्य कस्यचित् राज्ञः कथां श्रावयमि । श्रद्धया श‍ृणोतु तावत् ।



न्याववर्धनः सुभद्रदेशस्य राजा । न्याय-निष्ठत्वेन सच्चरित्रत्वेन च तस्य कीर्तिः सर्वत्र प्रसृता आसीत् । सर्वाः प्रजाः तम् आदरेण पश्यन्ति स्म । तस्य न्यायनिर्णये पक्षपातः दोषः वा कदापि न भवति स्म । अतः एव तदीयं नाम न्यायवर्धनः इति जातम् आसीत् । तदीयं वास्तविकं नाम तु बलवर्धनः इति ।

सुभद्रदेशस्य प्रतिवेशिराजः भौमः बल-वर्धनस्य सुहृत् । भौमस्य पुत्रः कुमारकेतुः । यदा कुमारकेतुः प्राप्तवयस्कः जातः तदा तं कदाचित् भौमः अवदत् - ''पुत्र ! अहं वृद्धः जातः अस्मि । अचिरात् एव भवतः राज्याभिषेकस्य निर्वर्तनं मम धर्मः । किन्तु यः राजा भवति सः धर्मन्याययोः विषये समग्रज्ञानवान् स्यात् । प्रतिवेशिराजः न्याय-वर्धनः मम मित्रम् अस्ति । सः धर्मनिष्ठः, न्यायपक्षपाती च । यदि भवान् कानिचन दिनानि तस्य शिष्यः भवेत् तर्हि वरं स्यात् । तेन भवतः हितम् एव सिद्ध्येत्'' इति ।

पितुः आदेशं शिरसा वहन् कुमारकेतुः सुभद्रदेशं गत्वा न्यायवर्धनेन मिलितवान् । न्यायवर्धनः तं वात्सल्येन पश्यन् - ''न्याय-विषये मया यद्यत् ज्ञातम् अस्ति तत्सर्वं भवन्तं बोधयिष्यामि । न्यायव्यवस्था नाम विशालः परिवारः इव । राजा तस्य मुख्यः भवति । परिवारे बालानां मध्ये यथा विवादाः उत्पद्यन्ते तथा राज्ये अपि प्रजानां मध्ये विवादाः भवन्ति । ते यदि परस्परसमालोचनेन तं विवादं परिहर्तुं शक्नुयुः तर्हि वरम् । यदि ते न शक्नुवन्ति तर्हि न्यायाधीशः तं निवारयितुं प्रयत्नं करोति । न्यायाधीशः अपि यत्र असमर्थः भवति स च व्यवहारः राजसमीपम् आगच्छति । राजा च सत्यतायाः मूलानि अन्विष्य आतलम् आलोड्य वस्तुस्थितिं विविच्य न्यायनिर्णयं कुर्यात् । न्यायनिर्णय-प्रक्रिया उत्तमा अस्ति चेदेव देशे उत्तमा शान्ति-व्यवस्था भवेत् । तदा एव राजा जनादरणीयः भवेत् । जनादरपात्रताप्राप्तिः एव राज्ञः मुख्यः उद्देशः । स च प्राप्तः चेत् सः चतुरङ्गबलं प्राप्तवान् इव'' इति बोधितवान् ।

एवं न्यायव्यवहारस्य विविधानि मुखानि बोधयन् न्यायवर्धनः कुमारकेतुं सूचितवान् - ''श्वः आरभ्य भवान् प्रतिदिनं राजसभाम् आगत्य न्यायविचारप्रक्रियां श्रद्धया आसक्त्या च परिशीलयतु'' इति । अतः अनन्तरदिने कुमारकेतुः न्यायवर्धनेन सह राजसभां गत्वा

न्यायनिर्णयप्रक्रियां सश्रद्धं परिशीलितवान् ।

तस्मिन् दिने त्रयः न्यायम् अपेक्ष्य आगताः आसन् । प्रथमव्यवहारस्य अभियाचकः आसीत् कृषिकः स्वामी । प्रतिवादी च चन्द्रः ।

राज्ञः सूचनायाः अनुगुणं वादी स्वामी स्वपक्षस्य आशयं विवृतवान् - ''महाराज ! आ बाल्यात् अहं चन्द्रः च सुहृदौ । यदा आवां प्राप्तवयस्कौ तदा आवयोः उभयोः अपि विवाहः प्रवृत्तः । विवाहात् पूर्वम् एव आवां निश्चितवन्तौ यत् यदि दैवानुग्रहः स्यात् तर्हि आवयोः कुटुम्बयोः वैवाहिकसम्बन्धः कल्पनीयः इति । विवाहोत्तरं मम पुत्रः जातः । तदा अहं चन्द्रम् उक्तवान् - 'मित्र ! भवतः जामाता जातः' इति । अनन्तरकाले चन्द्रस्य अपि अपत्यं जातम् । सा पुत्री आसीत् । अतः 'मम स्नुषा जाता' इति अहं सन्तुष्टः । तयोः अपि बालयोः मैत्री प्रवृद्धा । प्रायः तयोः बालयोः विवाहः निश्चितः इव । ज्येष्ठाः अपि एतद्विषये सहमताः जाताः ।

किन्तु हा हन्त ! कालस्य कुटिला गतिः ! चन्द्रः सौभाग्यदेवतायाः अनुग्रहं प्राप्तवान् । अतः सः यद्यत् स्पृष्टवान् तत्सर्वं सुवर्णं जातम् । तस्य सम्पत्तिः दिने दिने प्रवृद्धा । अल्पे एव काले सः धनिकः कृषिकः जातः । किन्तु मद्विषये सौभाग्यदेवी रुष्टा जाता । मया पदे पदे हानिः अनुभूता । मम आर्थिकस्थितिः शोचनीयतां गता । मम पञ्च पुत्राः जाताः । परिवारभारः प्रवृद्धः । किन्तु आयः क्षीणः जातः । अतः विद्यमाना अल्पा कृषिभूमिः अपि विक्रीता मया ।

मम एतां दुरवस्थां दृष्ट्वा चन्द्रः तत्पत्नी च मत्परिवारस्य सम्बन्धं न्यूनीकृतवन्तौ । तौ एतदपि उक्तवन्तौ यत् भवतः पुत्राय आवाभ्यां पुत्री लक्ष्मीः न दीयते इति । बान्धवाः अपि तयोः एतत् कथनं पुरस्कृतवन्तः सन्ति । बान्धवाः वदन्ति यत् बाल्यकाले उक्तस्य वचनस्य विशेषमहत्त्वं न भवति इति । किन्तु महाराज ! किं सकृत् दत्तं वचनं परित्यक्तुं शक्येत ? न खलु । भवता एव एते बोधनीयाः । लक्ष्मीः मम गृहस्य स्नुषा यथा भवेत् तथा करोतु कृपया'' इति ।

महाराजः स्वामिनः कथनं श्रुत्वा चन्द्रम् उक्तवान् - ''चन्द्र ! किं वदति भवान् ?'' इति । - *(अनुवर्तते)*



# सर्वपल्लि राधाकृष्णन्



१८८८ तमे क्रिस्ताब्दे सप्टेम्बर्मासस्य पञ्चमदिनाङ्के जातः सर्वपल्लिराधाकृष्णन्महोदयः अग्रिमेषु दिनेषु भारतीयतत्त्वज्ञानिषु अग्रमान्यः इति विश्वप्रसिद्धः अभवत् । स्वतन्त्रभारतस्य राष्ट्राध्यक्षपदम् अपि तेन अलङ्कृतम् ।

डा॰ राधाकृष्णन्महोदयः मद्रास्-प्रेसिडेन्सि-महाविद्यालये तत्त्वशास्त्रस्य प्राध्यापकरूपेण स्वस्य वृत्तिजीवनम् आरब्धवान् । ततः सः कलकत्ता-विश्वविद्यालयेऽपि अनेकानि वर्षाणि अध्यापनं कृतवान् । ततश्च (१९३६ - १९३९) आक्स्फर्ड्-विश्वविद्यालये पौरस्त्य-धर्मविभागे अध्यापनम् अकरोत् । १९४८ तम-वर्षपर्यन्तं बनारस्-हिन्दुविश्वविद्यालयस्य उप-कुलपतिः अपि आसीत् सः ।

तावता 'अत्यधिकबौद्धिकसामर्थ्यवान् उत्कृष्टः वाग्मी' इति सः प्रसिद्धः आसीत् । १९४९ तमे वर्षे सः युनेस्को-इत्यस्य अध्यक्षः अभवत् । परन्तु तेषु दिनेषु प्रमुखदेशेषु केषुचित् स्वतन्त्रभारतस्य प्रतिनिधित्वं वोढुं समर्थस्य कस्यचित् जनस्य आवश्यकता आसीत् । अतः तदा विश्वस्य बलिष्ठेषु राष्ट्रेषु अन्यतमत्वेन प्रसिद्धं U.S.S.R.(Union of the Soviet Socialist Republics, यश्च इदानीं विलयं गतः अस्ति ।)देशं प्रति राजदूतरूपेण प्रेषितः सः । तदा स्टालिन् तत्र शासनं करोति स्म । स्टालिनस्य सन्तोषजननम् अत्यन्तं दुश्शकमेव आसीत् । परं तादृशः अपि स्टालिन् डा॰ राधाकृष्णस्य असाधारणं व्यक्तित्वं विद्वत्तां च हार्देन भावेन श्लाघितवान् । तत्परिणामतः रशियाभारतयोः मैत्री वृद्धिं गता ।

यदा भारते विशिष्टस्य उपराष्ट्रपतेः आवश्यकता उत्पन्ना तदा राधाकृष्णन्वर्येण तत् पदं विभूषितम् । १९६२ तमे वर्षे सः भारतस्य राष्ट्रपतिः अभवत् । तावत्पर्यन्तम् अपि तेन अत्यन्तगौरवपूर्णरीत्या स्वस्य उत्तरदायित्वं निरूढम् ।

तेन आंग्लभाषया अनेके ग्रन्थाः रचिताः । तेषु 'इण्डियन् फिलासफि' अत्यन्तं प्रसिद्धम् । तत्र सः वदति - 'एतत् जगत् सकृत् भगवता सृष्टम् इति कथनं भगवतः न स्तुतिवचनम् । यतः सः इदानीम् अग्रे चापि सृजन् एव भवति । 'एतस्मिन् अर्थे इतिहासो नाम दैवेच्छायाः काव्यम्, दैवस्य एव अभिव्यक्तिः वा । दैवं प्रापञ्चिकमाध्यमेन कार्यं निर्वहत् विशोभते' इति । डा॰ राधाकृष्णः १९७५ तमे वर्षे दिवङ्गतः । तदीयं जन्मदिनं (सप्टेम्बर् ५) समग्रे भारते शिक्षकदिनत्वेन आचर्यते ।



अहो ओलम्पिकम् !
Presented by :
CHANDAMAMA
प्रायोजकत्वम् :
SCHOOLNET
सहप्रायोजकत्वम् :
nutrine
ग्रीसुदेशीया ओलम्पिया ग्रीकुदेवानाम् आश्रयभूमिः । क्रिस्तपूर्वात् १३७० तमवर्षात् एव क्रीडोत्सवानाम् आचरणं ग्रीकुजनानां जीवनस्य अङ्गम् आसीत् ।
कवयः वदन्ति यत् देवयोः युद्धतः ओलम्पिकक्रीडापरम्परा आरब्धा इति । ज्यूसः देवानां पिता । क्रोनोसः अपरः देवः । भूमेः स्वाम्यम् अधिकृत्य ओलम्पसपर्वते तयोः युद्धं प्रवृत्तम् । जयं प्राप्तवान् ज्यूसः विजयोत्सवाचरणस्य अङ्गतया महान्तं क्रीडोत्सवं व्यवस्थापितवान् ।
अहो, अहं पराजितः ।
अहो, अहं जयं प्राप्तवान् । वयं विजयोत्सवम् आचराम । भवन्तः आगच्छन्तु । वयम् आनन्दम् अनुभवामः ।
© 2000 Chandamama. All rights reserved
अपरम् ऐतिह्यं वदति - 'ग्रीकानां सन्तानदेवः रथचालनस्पर्धायां कथमपि जयं प्राप्य सुन्दर्याः हिपोडर्मायाः पाणिं गृहीतवान् । ततः तेन महती रथचालनस्पर्धा आयोजिता । एवम् ओलम्पिकस्पर्धा आरब्धा' इति ।
अन्ये केचन कथयन्ति यत् देवानां मातुः रियायाः पूजनार्थं तस्याः आलये क्रि. पू. १३७० तमे वर्षे स्पर्धाः आरब्धाः इति ।
भवन्तः इतोऽपि रथं चालयन्ति । आवां तु परिणयतौ ।
सः वधूं जित्वा परिणये उद्युक्तः । किम् अस्माकं प्रयत्नेन ?
ग्रीकानां जनप्रियः नायकः हर्क्युलसः कानिचन दिनानि यावत् 'ओलम्पिकस्पर्धानां पिता' इति भाव्यते स्म । राजा अगियसः स्वस्य अश्वशालायाः स्वच्छीकरणार्थं हर्क्युलसं नियोजितवान् । महता यत्नेन कार्यं साधितं हर्क्युलसेन । किन्तु राज्ञा प्रतिफलं किमपि न दत्तम् । कुपितः हर्क्युलसः राजानं परिभ्राम्य क्षिप्त्वा मारितवान् । विजयोत्सवरूपेण च क्रीडोत्सवम् आरब्धवान् ।
मया सह क्रीडा भवतः । दुर्गन्धयुक्तं अश्वशाला स्वच्छीकृता चेदपि न दत्तं प्रतिफलम् !! एतस्य फलम् अनुभविष्यति समग्रः देशः ।



ग्रीस्‌देशीयस्य अश्वकलाविदः अभिप्रायः तु - 'ट्रोजन्युद्धे पेट्रोक्लसस्य मरणं यत् जातं तस्य स्मरणार्थं शवसंस्काराङ्गतया क्रीडाः आयोजिताः । एताः एव ओलम्पिक्‌क्रीडानां पूर्वतनरूपाणि' इति ।
अहो, अपरः महात्मा दिवं गतः ! अस्माभिः पुनरपि धावनस्पर्धा आयोजनीया !
तेषु दिनेषु क्रीडोत्सवस्य शुभारम्भसमये ज़ियोसस्य पूजारूपेण पवित्राग्निः ज्वाल्यते स्म । सूर्यकिरणैः प्रवर्तितात् दीपात् स च पवित्राग्निः प्रज्वलति स्म । निश्चिते दिने यदि सूर्यकिरणाः दृष्टिगोचराः न भवन्ति तर्हि उत्सवारम्भे अपि विलम्बः भवति स्म ।
क्रीडाः समये न आरब्धाः चेत् राजा कुपितः भवति । किन्तु सूर्यकिरणाः यदि सुकाले न दृश्यन्ते तर्हि क्रीडाः पुनः समये न आरभ्यन्ते । यदि देवः राजा वा मयि विरुष्टः तर्हि अहं दण्डितः स्याम् !
अये दुष्ट ! अग्रे क्रीडाक्षेत्रे भवन्तं दण्डयिष्यामि ।
क्रि. पू. ७७६ तमे वर्षे ऐदम्प्राथम्येन ओलम्पिक्‌स्पर्धायाः लिखितोल्लेखः आरब्धः । तस्मिन् वर्षे महती धावनस्पर्धा आयोजिता । एलिसीयः करोयिबसः जयं प्राप्तवान् । प्रथमः ओलम्पिक्‌विजयी इति सः ख्यातः अभवत् ।
पूर्वं कदाचित् देवाय नायकाय च बलिरूपेण शिशोः समर्पणं कृत्वा तं मारयित्वा खादन्ति स्म जनाः । एषः परम्परागतः व्यवहारः आसीत् ।
मया एतादृशं वचनं किमर्थं दत्तम् ?
पिप्पलफलके वलयमालाम् उत्कीर्य डेल्फिनगरे देवाय अर्पणीया इति राजा इफिटसः आज्ञापितवान् । देवस्य सन्तोषार्थं तेन एवं कृतम् आसीत् । सा च परम्परा अद्यापि अनुवर्तते ।


तत्काले ओलम्पिक्स्पर्धासु महिलानां भागग्रहणं निषिद्धम् आसीत् । अतः भागग्राहिभिः धृतानि वस्त्राणि आदौ अपनेतव्यानि भवन्ति स्म ।
आदौ वस्त्रम् अपनयतु ।
एषा महिला ! प्रवेशः नास्ति ।
ओलम्पिक्स्पर्धायाः आरम्भात् पूर्वं स्पर्धार्थिभिः अपरिहार्यतया दशमासात्मकं प्रशिक्षणं प्राप्तव्यं भवति स्म ।
अस्वस्थः अहं दश मासान् न तिष्ठेयम् इति ते निवेदितः मया । किन्तु तत् न अवधारितम् ।
!!
प्राचीना ओलम्पिक्स्पर्धा पञ्चदिनात्मिका भवति स्म । प्रथमे दिने भागग्राहिणः निर्णायकाः च वन्यसूकरमांसं हस्तेन गृहीत्वा 'सुव्यवस्थार्थं सहकरोमि' इति प्रतिज्ञां कुर्वन्ति स्म ।
अर्हतावान् एव विजयित्वेन घोष्यते इति प्रतिजाने ।
तदनन्तरकाले विविधाः स्पर्धाः प्रवृत्ताः ।
अङ्कसाधनस्पर्धा, अश्वधावनस्पर्धा च जनप्रिया तासु ।
धाव ! मा तिष्ठ !


अन्या जनप्रिया क्रीडा आसीत् 'पेण्टाथ्लन्'-नामिका । सा च शूलक्षेपणे, गोलफलकक्षेपणे, धावने, दीर्घकूर्दने, मल्लयुद्धे च क्रीडापटोः सामर्थ्यं निरूपयति स्म ।
कश्चित् मां रक्षतु एतस्मात् अपायात् ।
प्राचीनतायाः ओलम्पिक्क्रीडायाः प्रमुखा जनप्रिया क्रीडा आसीत् मल्लयुद्धम् । अद्य यत् मल्लयुद्धम् प्रचलति तादृशं न आसीत् तत् । 'पंक्रशन्' इति तत् कथ्यते स्म । प्रतिस्पर्धिनः दशनम्, अङ्गुलिभञ्जनं, नेत्रयोः उत्पाटनं च निषिद्धम् आसीत् । एतदतिरिक्तम् यत्किमपि कर्तुं शक्यम् आसीत् मल्लयुद्धे ।
PAF
सः मम वामनेत्रं क्षीणं कृतवान् ।
भवान् नियमानां अक्षरशः पालकः, न तु तात्पर्यस्य ।
अमेरिकीयः मल्लः कश्चनः पंक्राशनयुद्धे द्विवारं विजयं प्राप्य तृतीयवारम् अपि भागं गृहीतवान् । तदा प्रतिस्पर्धी पराजयं प्राप्य कण्ठग्रहणपूर्वकं तं मारितवान् । मृतम् अपि तम् एव विजयित्वेन उद्घोषितवन्तः निर्णायकाः ।
ओलम्पिक्क्रीडासु अतिमहत्त्वपूर्णा आसीत् रथचालनस्पर्धा । भागग्राहिणः जयार्थं यत्किमपि कर्तुं सिद्धाः भवन्ति स्म । ते उद्देशपूर्वकं प्रतिस्पर्धिनं रथचालकं पीडयन्ति स्म । तस्य मार्गे विघ्नम् उत्पादयन्ति स्म । किन्तु महता श्रमेण रथं चालितवन्तः सारथयः तु पुरस्कारं न प्राप्नुवन्ति स्म । प्रत्युत रथस्वामिनः एव पुरस्कारभाजः भवन्ति स्म ।
एल्सिबियेटः क्रि.पू. ४१५तमे वर्षे एतादृशस्पर्धायां भागं वहन् सप्त रथान् प्रेषितवान् स्पर्धार्थम् । अतः प्रथमः, द्वितीयः, चतुर्थः चापि पुरस्कारः तेनैव प्राप्तः !!
प्रथमः पुरस्कारः एल्सिबियेटाय ।
द्वितीयः पुरस्कारः एल्सिबियेटाय ।
तृतीयः पुरस्कारः....
I
II
III
ओलम्पिक्स्पर्धायां द्रष्टृणां महान् सम्मर्दः भवति स्म, रथयात्रायाम् इव । प्रियस्य क्रीडापटोः दर्शनार्थं ८०,००० अधिकजनाः क्रीडाङ्गणे उपस्थिताः भवन्ति स्म ।
साधु साधु
जयतु
अहो, हो
देव ! मम ज्येष्ठः पुत्रः जेष्यति चेत् द्वितीयपुत्रं भवते बलिरूपेण समर्पयिष्यामि ।



अथ आधुनिकासु ओलम्पिक्स्पर्धासु विजयिनः यथा पदकं प्राप्नुवन्ति तथा पूर्वतनाः न प्राप्नुवन्ति स्म । आलिव्पत्राणां हारः, फलाङ्कुरः च महा-पुरस्कारत्वेन परिगण्यते स्म ।
६७ तमे क्रिस्तपूर्वाब्दे ग्रीकेतराः अपि स्पर्धासु भागम् अवहन् । तदा विजयिनः आलिव्हारप्राप्तिमात्रेण न तृप्ताः ।
एतानि पर्णानि म्लानानि । सद्योद्गतानि पर्णानि किं न प्राप्तानि ?
किम् एतेन ? पर्णहारप्राप्त्या किं फलम् ? सुवर्णं दीयताम् ।
ग्रीक्जनान् जितवन्तः रोमनृजनाः ओलम्पिक्क्रीडासु उत्साहेन भागं गृहीतवन्तः । ते स्पर्धाङ्गणं प्रविश्य अभूतपूर्वं परिवर्तनम् आनीतवन्तः ।
धिक् एताः भवतां क्षुद्राः स्पर्धाः ! अस्माकं स्पर्धां पश्यन्तु तावत् ।
६७ तमे क्रिस्तपूर्वाब्दे ओलम्पिक्क्रीडाः नवीनरूपं प्राप्तवत्यः । कासाञ्चित् स्पर्धानां निर्णायकेभ्यः ऐदम्प्राथम्येन उत्कोचः प्रदत्तः ।
निर्णायकेभ्यः उत्कोचः दत्तः इत्यस्य प्रथमोदाहरणं श्रूयते नीरोविषये । अयं नीरो रोमनगरे दह्यमाने वीणां वादयन् उपविष्टवान् आसीत् । सः दशभिः अश्वैः युक्ते रथे उपविश्य रथचालनस्पर्धायां भागं गृहीतवान् । सः रथात् पतितः । अतः स्पर्धायां पूर्णतः भागं ग्रहीतुं न शक्तः । तथापि सः एव विजयित्वेन घोषितः निर्णायकैः ।


प्राचीनाः ओलम्पिक्क्रीडाः क्षुद्रकाः इति मत्वा क्रि. श. ३९३ तमे वर्षे रोमनृचक्रवर्तिना प्रथम-थियोडोसियस्-वर्येण ताः निषेधिताः ।
आधुनिक-ओलम्पिक्क्रीडानां नवोदयः । १८९२ तमे वर्षे नवम्बर्मासस्य २५ दिनाङ्के पारिस्नगरे आधुनिक-ओलम्पिक्क्रीडानां प्रवर्तकस्य ब्यारन् डि. कबुर्टिन्वर्यस्य 'ओलम्पिकक्रीडाः आरभन्ताम्' इति घोषवाक्यं प्रेक्षकैः शान्तरीत्या पुनः उच्चारितम् । तथापि ते संशययुक्ताः आसन् एव ।
मया न ज्ञातम् । किमपि न बुद्धमेव ।
ओलम्पिक् - आन्दोलनम् । कोऽर्थः एतस्य ?
प्रथम-आधुनिक-ओलम्पिक् क्रीडानाम् आयोजनं १८९६तमे वर्षे ग्रीस्देशस्य ओलम्पियानगरे, यत् ओलम्पिक्क्रीडानां मूलस्थानं आसीत् तत्र आयोजयितुम् इच्छति, स्म ब्यारन् । किन्तु ओलम्पियानगरम् आधुनिकैः आनुकूल्यैः विरहितम् आसीत् । आनुकूल्यानां व्यवस्थापने अपि क्लेशः आसीत् ।
'ओलम्पिक्स् प्रचलिष्यति किम् ? न प्रचलेत् अपि ! अहो, अनिश्चयः !
ग्रीक्-उद्यमी जियोर्जस् एवरोफवर्यः यदि औदार्यं न प्रादर्शयिष्यत् तर्हि प्रथम-ओलम्पिक्क्रीडाः शक्याः न अभविष्यन् । सः ९२०,००० सुवर्णड्राक्मानि क्रीडाङ्गणस्य नवीकरणार्थं दत्तवान् ।
क्रीडाङ्गण-निर्माणार्थम् एतावत् पर्याप्तं स्यात् । किन्तु तरण-तटाकार्थं कः धनं ददाति ?
अन्ते १८९६ तमे वर्षे 'प्रथम-आधुनिक-ओलम्पिक्क्रीडानां स्थानम् अथेन्स्नगरं भवतु' इति निश्चितम् ।
प्रथम-आधुनिक-ओलम्पिक्क्रीडानाम् आरम्भः ओलम्पिक् गीतगानपूर्वकम् अभवत् । तच्च गीतं ग्रीककविना लारेट् कास्टिस् पलामसवर्येण रचितम् आसीत् । रागसंयोजनं सैरस् स्यामरस् कृतवान् आसीत् ।
ओलम्पिक्क्रीडाः समाप्ताः इति भाति । किन्तु .....?
'उत्तमं प्रदर्शनम्'
'पुनश्च'
'पुनरपि'
प्रथमायाः आधुनिक-ओलम्पिक्स्पर्धायाः प्रथमस्य पदकस्य विजेता अथेन्सीयः जेम्स् कॉनोली । सः त्रिप्लुतिकूर्दने सुवर्णपदकं प्राप्नोत् ।
'कथं कूर्दति सः!' मया तु 'जीवने पलायनसमये अपि एवं न कूर्दितम् ।


मूकः इति भाति । किन्तु किं तेन ? अहं तु जितवान् ।
१८०० तमे वर्षे प्यारिस्नगरे ध्येयवाक्यं स्वीकृतम् । तच्च - Citius, Altius, Fortius (वेगवत्तमम्, उन्नततमं, बलवत्तमं च) इति । डोमिनिलिन्-संन्यासिनः एतानि पदानि अन्ताराष्ट्रिय-ओलम्पिक्समित्या १८१७ तमे वर्षे अनुमतानि । प्यारिस्प्रदर्शिन्याः अङ्गत्वेन तस्मिन् वर्षे मासद्वयं यावत् स्पर्धाः प्रवृत्ताः ।
ZZZZZZ
प्यारिस्-ओलम्पिक्स्पर्धायाः विशेषः नाम - शाश्वत-वैरिणोः जर्मनी-फ्रान्स्देशयोः मध्ये प्रवृत्ता पादकन्दुक-स्पर्धा । राजकीयव्यवहार-सम्बद्धा आसीत् एषा । एवं हि विश्वस्यते यत् आतिथेय-गणः २५-१६ अङ्कैः जयं प्राप्नोत् इति ।
GOAL!
GOAL!
क्रीडेतिहासे ऐदम्प्राथम्येन महिलाः अत्रैव भागं गृहीतवत्यः । ब्रिटन्देशीया चार्लोट्कूपरवर्या टेनिस्-सिङ्गल्स्पर्धायां पदकं प्राप्य 'ओलम्पिक्-स्वर्णपदकविजेत्री प्रथमा महिला' इति ख्यातिं प्राप्तवती ।
OOPS!
तृतीया ओलम्पिक्स्पर्धा १९०४ तमे वर्षे अमेरिकादेशे सेण्ट्लूयिस्नगरे प्रवृत्ता । अमेरिकीयः धावनपटुः फ्रेड्लर्जुवर्यः वाहनसाहाय्येन धावन् प्राथम्यं प्राप्नोत् । निर्णायकाः तं भर्त्सितवन्तः । यस्मै प्रथमस्थानं दातव्यम् इति तैः निर्णीतं सः मादकद्रव्यसेवी इत्येतत् परीक्षया ज्ञातम् । वञ्चकं मादकद्रव्यसेविनं वा ते कथं विजयित्वेन घोषयेयुः ?
एकः वञ्चकः, अपरः दुर्व्यसनी ! एतयोः कतरः चेतव्यः ?


१९०८ तमे वर्षे ओलम्पिक्धारा लण्डन्नगरं प्रति गता । चतुर्थ-स्पर्धायाः आरम्भवासरे पेन्सिल्वेनियीयः धर्मगुरुः अवदत् - 'स्पर्धायां भागग्रहणम् एव प्रमुखं, न तु विजयप्राप्तिः ।'
CLONK
प्रथमस्थानस्वीकर्त्रे स्वर्णपदक-दानपरम्परा अत्रैव आरब्धा ।
अमेरिका-यु.के.देशयोः क्रीडापटवः तुच्छ-व्यवहारं प्रदर्शितवन्तः अत्र । ४०० मीटर्-धावनस्पर्धायां विघ्नोत्पादनकारणतः कार्पेण्टर्वर्यः पदक-प्राप्त्यर्थम् अनर्हः इति घोषितम् । पुनः स्पर्धा घोषिता । किन्तु अमेरिकीयाः अत्र भागग्रहणं निराकृतवन्तः । अतः प्रतिस्पर्धिनः अभावतः यु.के.देशीयः हाल्स्वेल्ले विनायासं स्वर्णपदकं प्राप्तवान् ।
१९१२ तमे वर्षे स्टाक्होम्नगरे प्रवृत्तासु स्पर्धासु तान्त्रिकाभिवृद्धिः साधिता । ऐदम्प्राथम्येन निर्णायकेभ्यः एलेक्ट्रानिक्-घट्यः अन्यसाधनानि च दत्तानि । अमेरिकन्क्रीडापटुः जिम् थोर्पे पेण्टाथ्लोन्-डेकाथ्लान्स्पर्धयोः विशेषनैपुण्यं प्रदर्श्य जनमनांसि जितवान् ।
षष्ठी स्पर्धा जर्मन्देशे बर्लिन्नगरे १९१६ तमे वर्षे करणीया इति निश्चितम् । किन्तु १९१४ तमे वर्षे प्रवृत्तं प्रथमजागतिकयुद्धं विघ्नकारकं जातम् ।
अग्निं वर्षय, धाव, मारय ।
युद्धानन्तरं पुनरपि स्पर्धादिनाङ्काः निश्चिताः । १९२० तमे वर्षे एण्ट्वर्प्नगरे प्रवृत्तायां स्पर्धायां पञ्चवलयात्मकः ओलम्पिक्ध्वजः उड्डायितः । डेल्फिप्रदेशे मन्दिरे स्थितं चिह्नम् एतस्य ध्वजस्य प्रेरकम् आसीत् । परस्पर-सम्बद्धाः पञ्चवर्णात्मकाः एते वलयाः प्रपञ्चस्य पञ्च भौगोलिकवलयान् स्मारयन्ति ।
अहं सदा क्रीडामनोभावेन व्यवहरामि । ओलम्पिक्स्फूर्तेः अनुगुणम् एव तिष्ठामि ।
बेल्जियम्-क्रीडापटुना ऐदम्प्राथम्येन ओलम्पिक्शपथवचनम् उच्चारितम् ।
तत् प्रतिज्ञावचनम् अनुच्चारयता मया युक्तं कृतम् ।
रे मूर्ख ! प्रतिज्ञा-वचनस्य आशयः अस्माभिः सर्वैः पालनीयः एव ।



१९२० तमे वर्षे एन्ट्वर्प्नगरे ओलम्पिक्स्पर्धायाः अङ्गतया पारावतानाम् उड्डापनम् अधिकृततया योजितम् ।
एते किम् एतत् कुर्वन्ति ? किं पारावतस्पर्धा समायोज्यते ?
१९२८ तमे वर्षे प्यारिस्-नगरे एव पुनरपि ओलम्पिक्स्पर्धा प्रवृत्ता । ऐ.ओ.सि.अध्यक्षस्य अधिकारावधेः अन्तिमकाले एषा प्रवृत्ता । अष्टम्याम् एतस्यां स्पर्धायां पावोनुर्मि सर्वोत्कर्षेण व्यराजत । तेन १९२०-१९२४-१९२८ इत्येतेषु त्रिषु अपि वर्षेषु विजयः साधितः । प्यारिस्-नगरे सः १५००मी-५०००मी. धावनस्पर्धासु विजयी जातः । सः हस्तेन सदा 'स्टाप् वाच्' वहन्
परीक्षते स्म यत् पूर्वतनैः साधितः विक्रमः मया अतिक्राम्यते वा न वा इति ।
मम विक्रमं भञ्जयितुं कोऽपि न समर्थः । अहम् अद्वितीयः ।



१९२८ तमे वर्षे आम्स्टर्डाम्नगरे प्रवृत्तायां स्पर्धायां भारत-देशः हाकीक्रीडायाम् आतिथेयं नेदर्ल्याण्ड्देशं ३-० अङ्कैः विजित्य स्वर्णपदकं प्राप्नोत् । अत्रैव ऐदम्प्राथम्येन अङ्क-फलकस्य उपयोगः कृतः । स्पर्धा-समाप्तिं यावत् ओलम्पिक्-ज्योतिः ज्वलति स्म अत्र ।
क्रीडासमाप्तितः पूर्वं ज्योतिः निर्विण्णं न भवेत् सर्वथा ।
देव ! क्रीडासमाप्तिं यावत् वृष्टिं झञ्झावातं वा मा प्रेषय ।
१९३२ तमे वर्षे पुनरपि अमेरिकादेशे लास्-एञ्जलिस्नगरे स्पर्धा प्रवृत्ता । सर्वेभ्यः देशेभ्यः आगन्तॄणां वासादि-निमित्तं नूतनतया ऐदम्प्राथम्येन ग्रामः निर्मितः ।
एषः क्रीडाग्रामः अस्मद्ग्रामसदृशः न दृश्यते ।
लास्-एञ्जलिस्स्पर्धायाम् एव ऐदम्प्राथम्येन विजयपीठम् उपयुक्तम् । पदकदानसमारम्भावसरे राष्ट्रियगीतानां गानं, राष्ट्रियध्वजानाम् उड्डायनं च आरब्धम् अत्रैव ।
एकादशी स्पर्धा बर्लिन्नगरे प्रवृत्ता । अत्र नाझिजम्-प्राबल्यं दृश्यते स्म । 'हेल् हिट्लर्' इति उद्घोषः सर्वदा श्रूयते स्म ।
हेल् हिट्लर्
हेल् हिट्लर्
हेल् हिट्लर्
ऐदम्प्राथम्येन अत्रैव स्पर्धा-विवरणम् आकाशवाण्या प्रसारितं, दूरदर्शनेन प्रदर्शितं चापि ।
मूर्ख ! सर्वेभ्यः मुखं दर्शयतु । तदपि प्रमुखम् इदानीम् ।
युक्ते काले स्मारितं भवता!


बर्लिन्स्पर्धायां नूतनतया घोषितः अंशः नाम - ग्रीस्देशीयायाम् ओलम्पियायां प्रवर्तितं क्रीडाज्योतिः अत्र आनीतम् । ३०७५ क्रीडापटवः सम्भूय एतत् ज्योतिः युरोपतः बर्लिनं प्रति आनीतवन्तः ।
कृष्ण-अमेरिकीयेन जेस्सी-ओवन्नुवर्येण बर्लिन्स्पर्धायां विशेषप्रतिभा प्रदर्शिता । सः धावनकूर्दनादिषु चतसृषु स्पर्धासु स्वर्णपदकं सम्पादितवान् । एतत् स्वजनजातिश्रेष्ठताप्रतिपादकं हिट्लरम् अनुदत् ।
धावतु कोऽपि । भवतु श्रेष्ठरक्तं प्रवहति ।
कोऽयं तारतम्यभावः ! कः उद्देशः एतस्य ?
द्वितीयजागतिकयुद्धस्य कारणतः (१९३९ - १९४५) द्विवारम् ओलम्पिक्स्पर्धाः निरस्ताः । टोकियोनगरे १९४० तमे वर्षे, लण्डन्नगरे १९४४ तमे वर्षे च स्पर्धाः चिन्तिताः आसन् ।
चतुर्दशी ओलम्पिक्स्पर्धा १९४८ तमे वर्षे लण्डन्नगरे प्रवृत्ता द्वितीयजागतिकयुद्धानन्तरम् । तत्र नेदरल्याण्डीया ३० वर्षीया द्विपुत्रवती महिला फेन्नी ब्लेङ्कर्स् कोन्-वर्या चत्वारि स्वर्णपदकानि सम्पाद्य स्वदेशस्य गौरवं वर्धितवती ।
अम्ब !अम्ब !
हेल्सिङ्किनगरे १९५२ तमे वर्षे प्रवृत्तायां पञ्चदश्याम् ओलम्पिक्स्पर्धायाम् एमल्झेटोपेक्वर्यः अपूर्वविक्रमं प्रदर्शितवान् । किन्तु तस्य विलक्षणः व्यवहारः विषमा दृष्टिः च द्रष्टृषु विलक्षणभावं जनयति स्म ।
ओलम्पिक्क्रीडा ऐदम्प्राथम्येन अमेरिकनृतीरं युरोपियनृतीरं च परित्यज्य गता सती १९५६ तमे वर्षे आस्ट्रेलियादेशे मेलबोर्न्नगरे प्रवृत्ता । षोडश्याः एतस्याः स्पर्धायाः वैशिष्ट्यं नाम युरोपियन्-क्रीडाः काश्चन आतिथेयदेशात् अन्यत्र, तत्रापि स्वीडन्देशस्य स्टाक्होम्नगरे प्रवृत्ताः । यतः आस्ट्रेलियानियमाः अन्यदेशीयानां जनानां प्रवेशम् अनुमन्यन्ते स्म, न तु अश्वादिजीविनाम् ।
अन्यदेशीयाः जनाः प्रवेशम् अर्हन्ति, न तु पश्वादयः ।
१९६० तमे वर्षे रोमनगरे प्रवृत्तायां सप्तदश्यां स्पर्धायाम् उभौ कृष्णवर्णीयौ अपूर्वं विक्रमं दर्शितवन्तौ । तेषु अन्यतमः अबेबे बिकिला । इथियोपियीयः सः नग्नपादः सन् मेरथान्-धावने भागं गृहीत्वा २ - घं, १५ - मि, १६.२ कलात्मककालेन एव धावनं समापितवान् । एवं हि श्रूयते यत् अफ्रिकन्-धावनपटवः अभ्यासकाले क्रीडापशुना सह धावन्ते स्म इति ।
किम् अत्र !


अपरः तावत्, अमेरिकीयः कासियस्क्लेवर्यः । सः एव अग्रे महम्मद् अलि इति ख्यातः । अष्टादशे एव वयसि सः मुष्टियुद्धे अपूर्वं विक्रमं प्रदर्शितवान् ।
अहम् अलीनामा मुष्टियुद्धनिपुणः अस्मि ।
अहो शौर्यम् पुत्रस्य !
१९६४ तमे वर्षे जपान-देशस्य टोकियोनगरे अग्रिमा ओलम्पिक्स्पर्धा प्रवृत्ता । सत्कारशीलस्वभावेन कुतूहलदर्शनेन च जपानीयाः क्रीडाशोभां वर्धितवन्तः । महत्यां वृष्ट्यां सत्याम् अपि ते स्पर्धाः द्रष्टुं क्रीडाङ्गणम् आगतवन्तः .....
..छत्राणि गृहीत्वा महत्या श्रद्धया ।
१९६८ तमे वर्षे मेक्सिकोदेशे प्रवृत्तायां स्पर्धायाम् ऐदम्प्राथम्येन महिला काचित् एन्रिक्वेटा बेसिलिकोनामिका ओलम्पिक्ज्योतिः प्रज्वालितवती ।
किमु एतत् ! महिलायाः प्राधान्यम् !
ते ओलम्पिक्-नियमान् एव विस्मृतवन्तः । महिला कथम् अत्र ?!
धिक् भवन्तम् । ते तु विवेकिनः । महिलाः अपि सामर्थ्येन पुरुषेभ्यः न अवराः । अतः युक्तम् एतत् ।
मेक्सिको-ओलम्पिक्स्पर्धा समुद्रतलात् ७५०० अङ्गुलोन्नते स्थले प्रवृत्ता इत्यतः उत्कूर्दने महत् आनुकूल्यं सिद्धम् । अमेरिकीयः बाब्बियामनः दीर्घकूर्दने अपूर्वं विक्रमं दर्शितवान् । तस्य सिद्धौ परिसरभारराहित्यं २७०% साहाय्यम् अकरोत् ।
वायुभारशून्यता अपि २७% साहाय्यम् अकरोत् ।
यदि चन्द्रलोके स्पर्धा स्यात् तर्हि इतोऽपि श्रेष्ठः विक्रमः प्रदर्शयितुं शक्येत ।
उत्कूर्दने नूतनानि तन्त्राणि अत्र समायोजितानि । अमेरिकीयः डिक्-फास्बरीवर्यः यं विक्रमं दर्शितवान् तं निमित्तीकृत्य तत् उत्कूर्दनं 'फास्बरी फ्लाप्' इति निर्दिष्टम् । उत्तानशायिवत् ऊर्ध्वम् उत्कूर्द्य शरीरम् अवनमय्य पादौ उन्नीय दण्डः अतिक्रमणीयः तत्र ।
अहो
हाहा
श्लाघ्यः अयम्
एतत्सर्वं नियमपुस्तके नास्ति ! कथम् एतत् !
म्युनिच्-नगरे १९७२ तमे वर्षे प्रवृत्ता स्पर्धा कलङ्कावह-घटनायाः साक्षिणी जाता । मुखावरण-धारिणः पेलिस्तिनीयाः उग्रवादिनः सप्टम्बर्-मासस्य पञ्चमे दिनाङ्के इस्रेलीयान् ११ क्रीडापटून् मारितवन्तः ।
फिन्लाण्ड्देशीयः लास्विरेन्वर्यः ५०००मी. धावने १०,०००मी. धावने च होलेस्-कौलेमिननस्य (१९१२) एमिल् झोटोप्याकस्य (१९५२), एव्लाडिनीर् कुत्सस्य (१९५६) च सिद्धिम् अतिक्रम्य अपूर्वविक्रमं दर्शितवान्; सः वन्यहरिण-क्षीरपानेन तादृशं सामर्थ्यं सम्पादितवान् आसीत् ।
MILK



आफ्रिकन्महिला उगाण्डादेशीया अकिबुवावर्या ४००मी. हर्डल्स्क्षेत्रे स्वर्णपदकं प्राप्तवती ।
नदिया कोमानिकि-वर्या मोण्ट्रियल्नगरे १९७६ तमे वर्षे प्रवृत्तायाम् ओलम्पिक्स्पर्धायाम् अङ्गसिद्धिक्षेत्रे अपूर्वं विक्रमं दर्शयन्ती बहूनि स्वर्णपदकानि प्राप्तवती ।
१९८० तमे वर्षे मास्को-नगरे प्रवृत्तायां स्पर्धायां राजकीय-व्यवहारस्य छाया विशेषतः दृष्टा । अमेरिका, जर्मनी, पाकिस्थानं, हालेण्ड्, आस्ट्रेलिया, इत्यादयः देशाः तत्र भागं न अवहन् । स्टीव्ओवेट्टः, सेबेस्टन्कोयी इत्येतयोः मध्ये विशेषस्पर्धा दृष्टा । तौ उभौ अपि ब्रिटनीयौ एव । अन्ते ८००मी. धावने ओवेट्टः, १५००मी. धावने कोयी च विजयं प्राप्तवन्तौ ।
नैव । सर्वथा नैव । मम श्वासपरीक्षा-मात्रेण एवं न निर्णेतव्यम् ।
१९८४ तमे वर्षे लास्-एञ्जलीस्नगरे प्रवृत्तां स्पर्धां अयोमय-जवनिकायुक्ताः देशाः बहिष्कृतवन्तः । १९३६ तमे वर्षे जेस्सी ओवन्वर्यः चत्वारि सुवर्णपदकानि सम्पाद्य यं विक्रमम् उपस्थापितवान् आसीत् । तत्समतां गतवान् अमेरिकीयः कार्ल्लेविस्वर्यः अत्र ।
१९८८तमे वर्षे सियोल्-नगरे प्रवृत्तायां ओलम्पिक्-स्पर्धायां क्रीडामनोभावस्य महती अधोगतिः दृष्टा । १००मी. धावने सुवर्ण-पदकं सम्पादितवतः केनडीयस्य बेन्जान्सनस्य सकाशात् पदकं प्रति-गृहीतं, मादकद्रव्यसेवनं निमित्तीकृत्य । मादकद्रव्य-सेवन-परीक्षार्थम् अत्र विशेषोपायाः ओकिताः आसन् । शताधिकानि मादकौषधानि निषिद्धौषधावल्यां घोषितानि अत्र ।
सः एव विजयी स्यात् । न स्यात् ? स्यात् एव ।
आघातकरी घटना काचित् अत्र प्रवृत्ता । उक्रेनियीयः सेर्गेबुब्कवर्यः, यः लघण्डकूर्दनस्पर्धायां पूर्वं विश्वविक्रमं प्रदर्शितवान् आसीत् सः, अत्र सामान्यलक्ष्यम् अपि साधयितुं न शक्तवान् ।
?!!
१९९२ तमे वर्षे बार्सिलोनगरे प्रवृत्तायां स्पर्धायाम् ओलम्पिक्स्फूर्तिः विशेषतः दृष्टा । लघवः अपि बहवः देशाः, एस्टोनिया, लाट्विया इत्यादयः, अत्र भागं गृहीतवन्तः ।
एतस्य शतकस्य अन्तिमा ओलम्पिक्स्पर्धा पुनरपि अमेरिकादेशे प्रवृत्ता । १९९६ तमे वर्षे अटलाण्टानगरे प्रवृत्तायाः स्पर्धायाः वैशिष्ट्यम् आसीत् यत् ऐदम्प्राथम्येन सर्वासां क्रीडानां प्रायोजकत्वं स्वायत्तसंस्थाभिः निरूढम् ।
एतस्याः १००मी. धावनस्पर्धायाः प्रायोजिक-संस्था जेपिसि कम्


ओलम्पिक्स्पर्धापरम्परा यदा प्रवृद्धा तदा केचित् चिन्तितं यत् हेमन्तकालिकक्रीडानां निमित्तम् अपि स्पर्धाः स्युः इति । अतः स्किइङ्ग्, स्केटिङ्ग् इत्यादीनां निमित्तम् अपि हेमन्त-ओलम्पिक्स्पर्धाः आयोजिताः अभवन् १९२४ तमे वर्षे । एषा अपि स्पर्धा वर्षचतुष्टये एकवारम् आयोज्यते ।
ओलम्पिक्-स्पर्धायाः अपरं मुखम् - विकलाङ्गानां कृते अपि स्पर्धा । क्रीडाप्रियाः एतादृशीः अपि स्पर्धाः विशेषतः इच्छन्तः ।
एतस्य वर्षस्य सप्टम्बर्मासे सिड्निनगरे प्रवर्तिष्यमाणायां स्पर्धायां सर्वेषाम् अवधानं निहितम् अस्ति । एषा नवशतकस्य प्रथमा स्पर्धा ।
एतदवसरे ओलम्पिक्ज्योतिः किञ्चिद्दूरं जलस्य अन्तः अपि नीतम् । ऐदम्प्राथम्येन एतत् प्रवृत्तम् । आस्ट्रेलियादेशीय-समुद्रतले निहितायाः सामुद्रिकसम्पत्तेः प्रदर्शने एतत् उपकारकं जातम् ।
अग्रे प्रवर्तिष्यमाणासु स्पर्धासु कीदृशं नावीन्यं सम्भवेत् इति न ज्ञायते ।
MARS

# ओलम्पिक्-प्रश्नाः



१. निमेषाभ्यन्तरे १००मीटर्-तरण कृतवान् प्रथमः तरणपटुः कः ?

२. १९३६ तमे वर्षे बर्लिन्स्पर्धायां अत्यल्पे एव काले पुरस्कारं यः प्राप्तावान् तस्य विक्रमः चित्ररूपेण मुद्रितः, दूरदर्शने प्रसारितश्च । सः कः ?

३. १५०० मीटर्धावने अपूर्वविक्रमं प्रदर्श्य कः आस्ट्रेलियीयः क्रीडापटुः 'मानवरूपी हरिणः' इति ख्यातिं प्राप्तवान् ?

४. ६५वर्षीयः सः कः, यश्च स्वर्णपदकसम्पादने स्वदेशीयानां साहाय्यं कृतवान् ? तच्च कदा ?

५. कदा भारतीयहाकिगणेन स्वर्णपदकं प्राप्तं, कदा च सः तस्य प्राप्तितः वञ्चितः अभवत् च ?

६. ओलम्पिक्ज्योतिः प्रथमक्रीडापटुना नीत्वा द्वितीयाय अर्पितं, किन्तु तत् तृतीयेन न प्राप्तम् एव । एवम् ओलम्पिक्ज्योतिषः चौर्यम् ऐदम्प्राथम्येन कदा प्रवृत्तम् ?

७. १९९६ तमे वर्षे अट्लाण्टानगरे प्रवृत्तानां स्पर्धानां पदकानि, पूर्वतन-स्पर्धासु वितीर्णेभ्यः पदकेभ्यः भिन्नानि आसन् । तत् भिन्न-स्वरूपं किम् ?

८. मार्च् स्पिट्ज्वर्येण प्राप्ता कीर्तिः कीदृशी ?

९. २८ अङ्गुलात्मकं विक्रमं भञ्जयित्वा २९.२५० अङ्गुलोन्नतम् उत्कूर्दनं कृत्वा अपूर्वं विक्रमं प्रदर्शितवान् कः ?

१०. सः भारतीयः कः यश्च ओलम्पिक्स्पर्धायाम् अद्वितीयं वैयक्तिकपदं प्राप्तवान् ?

उत्तराणि –

१. अमेरिकीयः जानिवेस्मुल्लर्, यश्च अग्रिमकाले 'टार्जान्' इति ख्यातः ।

२. लेनी रैफेन्स्टाल् ।

३. हर्ब् ऐलिट् । सः १९६० तमीयायां रोमनगरे प्रवृत्तायां स्पर्धायां तत् दूरं ३.३५ निमेषाभ्यन्तरे अतिक्रान्तवान् ।

४. स्विडीशीयः आस्कर् स्वान् ६५वर्षीयः सन् अपि १९१२तमे वर्षे स्टाक्होम्स्पर्धायां भागं गृहीत्वा वैयक्तिकपदकं सम्पादितवान्, स्वदेशीयः गणः सर्वप्राथम्यं यथा प्राप्नुयात् तथा साहाय्यं कृतवान् च ।

५. १९१२ तमे वर्षे आर्मस्टर्डाम्स्पर्धायां स्वर्णपदकं सम्पादितम् । रोमनगरे १९६० तमे वर्षे प्रवृत्तायां स्पर्धायां स्वर्णपदकप्राप्तितः वञ्चितः अभवत् च ।

६. १९२ तमे वर्षे बार्सिलोनानगरे प्रवृत्तायां क्रीडायां ओलम्पिक्ज्योतिः चोरितम् ।

७. प्रतिस्पर्धं निश्चितपदकानि यथापूर्वं दत्तानि एव । तेनैव सह पञ्चगोलचित्रात्मकम् अपरम् अपि दत्तम् ।

८. मुनिच्नगरे प्रवृत्तायां स्पर्धायां (१९७२) सः तरणस्पर्धासु सप्त स्वर्णपदकानि प्राप्तवान् । सप्तसु अपि पूर्वतनैः साधितः विक्रमः तेन भञ्जितः ।

९. बाबूबियामन् । मेक्सिकोदेशे १९६८तमे वर्षे ।

१०. १९००तमे वर्षे प्यारिस्नगरे २०० मीटर्स्पर्धायां नार्मन् प्रिचर्डवर्यः रजतपदकं प्राप्तवान् ।

# चित्रस्पर्धा













एतानि प्रसिद्धानि ओलम्पिक्सम्बद्धानि चित्राणि । एते श्रेष्ठाः क्रीडापटवः के इति किं भवन्तः अभिज्ञातुं शक्नुयुः ?

(उत्तरम् अग्रिमे पृष्ठे)

## कस्य देशस्य किं चिह्नम् ?

विविधदेशानां ध्वजस्य अभिज्ञाने कियत् सामर्थ्यं भवताम् ? अधोदर्शिताः ध्वजाः कस्य देशस्य इति जानन्तु । तथैव ध्वजेन सह यानि प्रतीकचिह्नानि सन्ति तानि कया ओलम्पिक्स्पर्धया सम्बद्धानि, तेषां वैशिष्ट्यं च किम् इत्यादिकं किं जानन्ति भवन्तः ? (उत्तरम् अग्रिमे पृष्ठे)










# मार्गान्वेषणम्

अमितः ओलम्पिक्ज्योतिः गृहीत्वा प्रस्थितवान् अस्ति । येन क्रमेण स्पर्धा प्रचलति तं क्रमम् अनुसृत्य तेन गन्तव्यम् । ज्योतिषः नयने किं तस्य साहाय्यं कुर्वन्ति भवन्तः ?



उत्तराणि -



## चित्रस्पर्धा

१. कार्ल् लेविस् । सः १९८४ तमे वर्षे लास् एञ्जलीस्नगरे प्रवृत्तायां स्पर्धायां जेस्सी ओवन्वर्येण दर्शितं विक्रमम् अतिक्रान्तवान् चतुर्णां स्वर्णपदकानां प्राप्त्या ।

२. जेस्सी ओवन् । एषः १९३६ तमे वर्षे बर्लिन्नगरे प्रवृत्तायां स्पर्धायां चत्वारि स्वर्णपदकानि प्राप्तवान् । एतस्य विक्रमः तावत् अखण्डितः आसीत्, यावत् कार्ललेविस् लास् एञ्जलिस्नगरे एतं विक्रमं भञ्जितवान् ।

३. नदिया कोमानिकि । एषा १९७६ तमे वर्षे माण्ट्रियल्नगरे प्रवृत्तायां स्पर्धायाम् अपूर्वं विक्रमं प्रदर्शितवती ।

४. डालि थाम्सन् । एषः मास्कोनगरे (१९८०) लास्एञ्जलीस्नगरे (१९८४) च स्वर्णपदकं प्राप्तवान् ।

## चिह्नसंयोजनम्

१. 'वोल्डी'शुनकः केनडादेशे माण्ट्रियलुनगरे १९७८ तमे वर्षे प्रवृत्तायाः ओलम्पिक्स्पर्धायाः प्रतीकचिह्नम् ।

२. 'कोबी'मार्जारः स्पेन्देशे बार्सिलोनानगरे १९८२ तमे वर्षे प्रवृत्तायाः ओलम्पिक्स्पर्धायाः प्रतीकचिह्नम् ।

३. 'होडोरी'व्याघ्रः दक्षिणकोरियादेशे सियोलनगरे १९८८ तमे वर्षे प्रवृत्तायाः ओलम्पिक्स्पर्धायाः प्रतीकचिह्नम् ।

४. सिड्निनगरे वर्षेऽस्मिन् प्रवर्तिष्यमाणायाः ओलम्पिक्स्पर्धायाः प्रतीकचिह्नभूताः जीविविशेषाः ।

५४. युद्धस्य प्रथमदिने...

# महाभारतम्

सर्वादौ भीमः युद्धम् आरब्धवान् । सः सिंहगर्जनं कुर्वन् कौरवसैन्यस्य उपरि आक्रमणं कृतवान् । तदा दुर्योधनः, दुश्शासनः, दुर्मुखः, सुस्सहः इत्यादयः अनेके योद्धारः भीमम् आक्रान्तवन्तः । एतत् दृष्ट्वा उपपाण्डवाः,-अभिमन्युः, नकुलः, सहदेवः, धृष्टद्युम्नः इत्यादयः भीमस्य साहाय्यार्थम् आगतवन्तः । क्रमेण सर्वत्र युद्धस्य तीव्रता प्रसृता ।

एकत्र भीमार्जुनयोः युद्धम् आरब्धम् । तौ उभौ अपि स्वस्य सामर्थ्यस्य परिचयं कारितवन्तौ । अपरत्र सात्यकि-कृतवर्मणोः, अभिमन्यु-बृहद्रथयोः, भीम-दुर्योधनयोः, दुर्मुख-सहदेवयोः, युधिष्ठिर-शल्ययोः, धृष्टद्युम्न-द्रोणयोः, धृष्टकेतु-बाह्लीकयोः, अलम्बुस-घटोत्कचयोः, अश्वत्थाम-शिखण्डिनोः, विराट-भगदत्तयोः, द्रुपद-सैन्धवयोः च युद्धम् आरब्धम् । दीर्घकाल-पर्यन्तं घोरयुद्धं प्रवृत्तं चेदपि एतस्मिन् युद्धे कस्यापि जयः पराजयः वा न निश्चितः । युद्धं तु दर्शनयोग्यम् आसीत् ।

उभयोः अपि पक्षयोः युद्धं तीव्रतां गतम् । भीष्मः स्वस्य पराक्रमं दर्शितवान् । सर्वे तस्य शौर्यं दृष्ट्वा आश्चर्यचकिताः । मध्याह्नकाले भीष्मः पाण्डवसैन्यस्य मध्यभागं गतवान् । तस्य रक्षणार्थं दुर्मुखः, कृतवर्मा, कृपाचार्यः, शल्यः, विविंशती च गतवन्तः । स्वपक्षस्य सैनिकान् लीलया नाशयन्तं भीष्मं दृष्ट्वा





अभिमन्युः कुपितः । अतः सः प्रत्याक्रमणम् आरब्धवान् । भीष्मस्य रथस्य ध्वजं पातयित्वा तदीयान् सहचारिणः वीरान् व्रणितान् कृतवान् । एतत् युद्धं दृष्ट्वा अन्ये चिन्तितवन्तः यत् एषः अभिमन्युः युद्धकौशलेन अर्जुनम् अपि प्रायः अतिशेते इति । अल्पे एव काले भीमः, विराटः, सात्यकिः, धृष्टद्युम्नः इत्यादयः दश वीराः अभिमन्योः साहाय्यार्थम् आगतवन्तः ।

उत्तरः गजम् आरुह्य शल्यं सम्मुखीकर्तुं गतवान् । किन्तु युद्धसमये व्रणितः सन् सः गजात् अधः पतितवान् । एतत् दृष्ट्वा उत्तरस्य सहोदरः श्वेतः युगपत् एव सप्त कौरववीरान् सम्मुखीकृतवान् । एतस्मिन् घोरयुद्धे शल्यः कष्टेन प्राणरक्षणं कर्तुं शक्तवान् । किन्तु भीष्मतः श्वेतस्य रक्षणार्थं पाण्डववीरैः महान् प्रयासः करणीयः अभवत् । एतत्कारणतः उभयोः अपि पक्षयोः घोरं युद्धं प्रवृत्तम् । श्वेतः अन्यान् सर्वान् कौरवप्रमुखान् धावयित्वा भीष्मेण सह युद्धम् आरब्धवान् । यदि तस्मिन् समये सः भीष्मं सम्मुखीकृतवान् न स्यात् तर्हि पाण्डवसैन्यस्य महान् भागः नष्टः अभविष्यत् । श्वेतः शौर्येण युद्धं कुर्वन् अन्ते भीष्मं प्रतिगतं कृतवान् । एतस्मात् पाण्डवसैन्ये महान् हर्षनादः उत्पन्नः ।

भीष्मः यदा रणरङ्गात् प्रतिगतः तदा श्वेतः धृतराष्ट्रपुत्राणां समीपं गतवान् । कौरवसेनां लीलया नाशयन् अग्रे प्रस्थितवान् । एतत् दृष्ट्वा भीष्मः पुनरपि श्वेतं सम्मुखीकृतवान् । भीष्मस्य साहाय्यार्थम् अष्ट कौरववीराः आगताः । ते सर्वे सम्भूय युगपत् श्वेतम् उद्दिश्य बाणवर्षणं कृतवन्तः । तथापि धैर्यच्युतिम् अप्राप्नुवन् श्वेतः तान् सर्वान् अपि युगपत् एव सम्मुखीकुर्वन् बाणप्रहारैः भीष्मं नितरां पीडितवान् । द्रष्टारः योद्धारः चिन्तितवन्तः यत् भीष्मश्वेतयोः युद्धे भीष्मस्य एव पराजयः भवेत् इति । परं किञ्चित् कालानन्तरं परिस्थितिः व्यत्यस्ता जाता । श्वेतस्य रथः भग्नः । तथापि सः न धैर्यच्युतः । गदाम् उन्नीय भीष्मस्य रथस्य प्रहारं निरन्तरं कृतवान् । श्वेतस्य गदाप्रहारतः भीष्मस्य रथः अपि भग्नः । सः स्वस्य रथस्य भङ्गं पूर्वम् एव ऊहितवान् आसीत् । अतः सः भग्नात् रथात् निर्गत्य श्वेतम् उद्दिश्य बाणवर्षणम् आरब्धवान् ।

श्वेतः रथविहीनः सन् अपि भूमौ एव

स्थित्वा युद्धम् अनुवर्तितवान् । एतत् दृष्ट्वा सात्यकिभीमाभिमन्युप्रभृतयः तस्य साहाय्यार्थं धावितवन्तः । किन्तु भीष्मः बाणवर्षणेन तान् दूरे एव स्थगितवान् । अनन्तरं श्वेतम् उद्दिश्य बाणवर्षणम् अनुवर्तयन् तं संहृतवान् । श्वेतः महारथः यद्यपि न आसीत्, तथापि पाण्डव-सेनायाः सेनापतिषु अन्यतमः तु आसीत् एव । अतः तस्य मरणस्य वार्तां ज्ञातवतां पाण्डव-पक्षीयाणां महत् दुःखम् । किन्तु कौरवपक्षे अमितानन्दः । दुर्योधनः तु एतस्मात् नितरां सन्तुष्टः ।

श्वेतस्य मरणस्य अनन्तरं तदीयः भ्राता शङ्खः क्रुद्धः सन् कृतवर्मणा सह स्थितेन शल्येन सह युद्धार्थं गतवान् । तदा सप्त कौरववीराः शल्यस्य साहाय्यार्थम् आगताः । भीष्मः अपि मृत्युदूतः इव शङ्खस्य उपरि आक्रमणं कृतवान् । एतस्मिन् समये अर्जुनः शङ्खस्य साहाय्यार्थम् आगतवान् । शल्यः शङ्खस्य रथं स्थगितवान् । तदा शङ्खः अर्जुनस्य रथे उपविष्टवान् ।

भीष्मः अर्जुनं परित्यक्तवान् । द्रुपदम् उद्दिश्य बाणवर्षणम् आरब्धवान् च । सः दावानलः इव द्रुपदसैन्यं नाशयन् आसीत् । भीष्मस्य एतं युद्धक्रमं दृष्ट्वा पाण्डवाः सर्वे नितरां भीताः । तस्य सम्मुखीकरणं कथम् इति पाण्डवपक्षे चिन्ता उत्पन्ना ।

अत्रान्तरे सूर्यास्तः जातः । उभयपक्षीयाः अपि युद्धं परित्यज्य विश्रान्त्यर्थं स्वशिबिरं गतवन्तः । भीष्मस्य युद्धशैलीं दृष्ट्वा दुर्योधनः नितरां सन्तुष्टः आसीत् । पाण्डवशिबिरे तु निरुत्साहः व्याप्तः आसीत् । प्रथमदिने जातां स्वसैन्यस्य महतीं हानिं दृष्ट्वा धर्मराजः चिन्ताक्रान्तः जातः आसीत् । सः कृष्णम् अवदत् – ''कृष्ण ! अद्य भीष्मेण कियता पराक्रमेण युद्धं कृतम् । अस्माकं सैन्यं दावानलः इव नाशितवान् सः । भीष्मं को





वा पराजेतुं शक्नुयात् ? भीष्मस्य सम्मुखीकरणं कर्तुं शक्यते इति चिन्तयता मया मूर्खता आचरिता । वस्तुतः अहं चिन्तयामि - युद्धं परित्यज्य अरण्ये वासः एव वरम् इति । युद्धस्य त्यागतः राजानः अपि मरणात् रक्षिताः भवेयुः । राज्याकाङ्क्षा एव माम् एतस्मिन् युद्धे प्रावर्तयत । मम सर्वे अनुजाः अद्य व्रणिताः सन्ति । इदानीं मया किं वा करणीयम् ? अर्जुनः तटस्थः इव व्यवहरति युद्धविषये । भीमः एकः एव पूर्णेन मनसा युद्धं कुर्वन् अस्ति । मम तु भाति यत् भीष्मतः मरणम् एव अस्माकं ललाटे लिखितम् अस्ति इति'' इति ।

कृष्णः युधिष्ठिरं सान्त्वयन् उक्तवान् - ''भवतः एषा व्याकुलता न युज्यते । भवतः अनुजाः त्रिलोकीम् अपि जेतुं समर्थाः सन्ति । सात्यकिः, विराटः, द्रुपदः इत्यादयः महारथाः भवतः पक्षे सन्ति । अतः किमर्थं चिन्ता भवतः ? अन्यच्च शिखण्डी अपि भवतः पक्षे एव अस्ति । सः तु भीष्मं मारयितुम् एव जन्म प्राप्तवान् अस्ति । तं सेनापतित्वेन नियोजयतु । युद्धम् अनुवर्तयतु'' इति ।

एतदनन्तरं युधिष्ठिरः धृष्टद्युम्नम् उक्तवान् - ''कृष्णः सूचितवान् अस्ति यत् भवान् सेनापतित्वेन नियोजनीयः इति । भवता सेनापतित्वम् अङ्गीकृत्य कौरवसेनायाः संहारः करणीयः । वयं सर्वे भवता सहैव भवामः'' इति ।

एतत् श्रुत्वा धृष्टद्युम्नः यधिष्ठिरम् उक्तवान् - ''द्रोणस्य वधार्थम् एव मया जन्म प्राप्तम् । भीष्मः, द्रोणः, शल्यः, कृपः इत्यादीन् सर्वान् अपि महारथान् अहं सम्मुखीकरिष्यामि । भवता कापि चिन्ता न करणीया'' इति ।

''मया श्रुतं यत् क्रौञ्चव्यूहः शत्रुनाशकः अस्ति इति । पुरा देवदानवयोः युद्धं यदा प्रवृत्तं तदा देवगुरुः बृहस्पतिः इन्द्रम् एतां व्यूहरचनां बोधितवान् आसीत् । एतां रचनां बहवः न जानन्ति । श्वः भवान् अस्माकं सेनां क्रौञ्चव्यूहरीत्या सज्जीकरोतु'' इति उक्तवान् युधिष्ठिरः ।

धृष्टद्युम्नः तद् अङ्गीकृतवान् । अनन्तरदिने प्रातः सः पाण्डवसेनां क्रौञ्चव्यूहरीत्या एव सज्जीकृतवान् । व्यूहस्य अग्रभागे अर्जुनः स्थितवान् । शिरोभागे द्रुपदः स्वसेनया सह स्थितवान् । युधिष्ठिरः पुच्छभागे, भीमः धृष्टद्युम्नः च पक्षभागे स्थितवन्तः । सूर्योदयात्



अद्य भीष्मं संहरिष्यामि'' इति । कपिध्वजेन अन्यध्वजैः च युक्तः अर्जुनस्य रथः भीष्मं लक्ष्यीकृत्य अगच्छत् । मार्गे अर्जुनः कौरव-सेनायाः महान्तं भागं नाशितवान् ।

एतत् दृष्ट्वा भीष्मः अर्जुनं सम्मुखी-कृतवान् । तेन सह सैन्धवादयः अनेके वीराः अपि आगताः । द्रोणः, कृपः, दुर्योधनः, शल्यः, अश्वत्थामा, विकर्णः इत्यादयः अपि अर्जुनस्य उपरि बाणवर्षणं कृतवन्तः । युगपत् सर्वेषां बाणप्रहारान् प्राप्य अपि अर्जुनः किञ्चिदपि विचलितः न जातः । सर्वान् कौरववीरान् व्रणितान् कृतवान् सः । तदा तस्य साहाय्यार्थं सात्यकिः, विराटः, धृष्टद्युम्नः, अभिमन्युः, उपपाण्डवाः इत्यादयः आगताः । अर्जुनं द्रोणात् मोचयितुं द्रुपदः द्रोणेन सह युद्धम् आरब्धवान् । तदा अर्जुनः अन्यान् कौरववीरान् बाणैः प्रहरन् नितरां पीडितवान् ।

पूर्वम् एव व्यूहः सिद्धः सन् युद्धं प्रतीक्षमाणः अतिष्ठत् ।

पाण्डवसेनायाः क्रौञ्चव्यूहं दृष्ट्वा भीष्म-द्रोण-दुर्योधनादयः विस्मिताः जाताः । अनन्तरं तेऽपि स्वसेनायाः व्यूहं रचितवन्तः । विविधाः योद्धारः व्यूहस्य विविधेषु स्थानेषु स्थितवन्तः ।

युद्धारम्भसमनन्तरम् एव अभिमन्युः, भीमः, अर्जुनः, धृष्टद्युम्नः इत्यादीनां पाण्डव-वीराणां सेनायाः उपरि बाणवर्षणम् एव आरब्धवान् भीष्मः । अतः पाण्डवव्यूहः किञ्चित् शिथिलः जातः । एतत् दृष्ट्वा कुपितः अर्जुनः कृष्णम् अवदत् - ''भगवन् ! यदि भीष्मः एवमेव युद्धं करोति तर्हि अल्पे एव काले अस्माकं सैन्यं पराजितं भवति । अतः भवान् मम रथं भीष्मसमीपं नयतु । अहम्

एतस्मिन् एव अवसरे दुर्योधनः भीष्म-समीपम् आगत्य अवदत् - ''तात ! अर्जुनः अस्माकं सेनां नाशयन् अस्ति । भवत्कारणतः एव कर्णः प्रतिज्ञां कृतवान् यत् भीष्मे उपस्थिते, अहं युद्धं न करिष्यामि इति । यदि सः रणरङ्गे अद्य स्यात् तर्हि युद्धस्य स्थितिः अन्या एव अभविष्यत् । किन्तु हन्त ! सः अद्य नास्ति । अतः अर्जुनस्य वधार्थम् उपायः भवता एव चिन्तनीयः'' इति ।

दुर्योधनस्य मुखात् एतत् वचनं श्रुत्वा खेदेन उक्तवान् भीष्मः - ''हन्त ! कोऽयं क्षत्रिय-धर्माननुगुणः व्यवहारः भवतः !'' इति । ततः सः स्वस्य रथम् अर्जुनस्य समीपं नीतवान् ।

तदा भीष्मस्य साहाय्यार्थं कौरववीराः, अर्जुनस्य साहाय्यार्थं पाण्डववीराः च आगतवन्तः । एतस्मात् युद्धस्य तीव्रता प्रवृद्धा । सर्वेषु पश्यत्सु भीष्मार्जुनयोः युद्धम् आरब्धम् । उभौ अपि अन्यस्य बाणप्रहारतः आत्मरक्षणं कुर्वन्तौ स्वपराक्रमं दर्शितवन्तौ । एतस्मिन् युद्धे उभयोः अपि रथौ भग्नौ । सारथी च व्रणितौ । कृष्णस्य शरीरे त्रयः बाणाः लग्नाः । शरीरतः रक्तधारा निर्गता । एतस्मात् क्रुद्धः अर्जुनः भीष्मस्य सारथिं बाणप्रहारेण व्रणितं कृतवान् । एतस्मिन् युद्धे भीष्मस्य अर्जुनस्य वा पराजयः न जातः ।

एतस्मिन् एव काले द्रोण-धृष्टद्युम्नयोः अपि युद्धम् आरब्धम् । धृष्टद्युम्नस्य युद्ध-कौशलं दृष्ट्वा पाण्डवाः नितरां सन्तुष्टाः सन्तः सिंहनादं कृतवन्तः । किन्तु किञ्चित्कालानन्तरं धृष्टद्युम्नः रथहीनः जातः । तस्य कवचानि अपि भग्नानि । द्रोणस्य बाणप्रहारैः सः नितरां व्रणितः । तदा भीमः आगत्य तस्य रक्षणं कृतवान् । भीम-भीष्मयोः युद्धम् आरब्धम् ।

दुर्योधनः भीमं सम्मुखीकर्तुं कलिङ्गसेनां प्रेषितवान् । तदा द्रोणः भीमेन सह युद्धं परित्यज्य विराटद्रुपदाभ्यां सह युद्धार्थं गतः । धृष्टद्युम्नः अपरं रथम् आरुह्य युधिष्ठिरसमीपं गतवान् । भीमः कलिङ्गसेनया सह युद्धं कृतवान् । तस्मिन् युद्धे कलिङ्गस्य पुत्राः शुक्रदेवः, भानुमान्, श्रुतायुः च हताः जाताः ।

भीमः शौर्येण कौरवसेनां प्रविश्य वीरान् हतवान् । एतत् दृश्यं दृष्ट्वा नवोत्साहं प्राप्तवान् धृष्टद्युम्नः सिंहनादं कुर्वन् भीमस्य साहाय्यार्थम् आगतवान् । भीमः तु युद्धसमये न मानवः इव, अपि तु कालरुद्रः इव दृश्यते स्म ।

स्वसेनायाः मध्ये प्रचलन्तं कोलाहलं दृष्ट्वा भीष्मः तत्र आगतवान् । सात्यकिः, भीमः, धृष्टद्युम्नः च तदुपरि आक्रमणम् आरब्ध-वन्तः । भीष्मः तान् त्रीन् अपि शौर्येण सम्मुखीकृतवान् । अत्रान्तरे भीमस्य रथस्य अश्वाः मारिताः । तदा धृष्टद्युम्नः भीमं स्वस्य रथे आरोप्य अन्यत्र नीतवान् । भीमस्य सन्तोषं जनयितुं सात्यकिः भीष्मस्य सारथिं बाणप्रयोगेण मारितवान् । सारथिविहीनं रथम् अश्वाः स्वयमेव अन्यत्र नीतवन्तः । तदा सात्यकिः भीमं श्लाघमानः उक्तवान् - ''महावीर ! भवतः पराक्रमः असदृशः । एकाकी एव भवान् कलिङ्गराजपुत्रान् मारितवान्'' इति ।



**महासंस्कृत्याः स्थूलदर्शनम्**
**प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः**

## ७. अज्ञातकुलगोत्रः महर्षिः

ग्रीष्मविरामः आरब्धः आसीत् । चमेल्याः सन्दीपस्य च महान् समयः आसीत्, पितामहस्य मुखात् अनेकाः कथाः श्रोतुं, तम् उद्दिश्य प्रश्नान् प्रष्टुं च । पितामहस्य आहारसमये, पठनसमये, विहारसमये, विश्रामसमये चापि तौ प्रश्नान् पृष्ट्वा बहून् ऐतिहासिकविषयान् ज्ञातुं प्रयत्नं कुरुतः स्म ।

कदाचित् चमेली उक्तवती - "तात ! दण्डकारण्यस्य कथा अतीव रोचिका आसीत् । तत्र काले काले प्रवृत्ताः घटनाः अपि रोचिकाः एव" इति ।

"प्राचीने काले शिक्षाकेन्द्राणि अपि आसन् खलु ?" इति पृष्टवान् सन्दीपः ।

"आम् । वनेषु गुरोः वासस्थाने गुरुकुलानि भवन्ति स्म । गुरवः प्रायः ऋषयः भवन्ति स्म । ते तु वनेषु एव वासम् इच्छन्ति स्म । अतः नदीतीरेषु रमणीयेषु खातेषु च गुरुकुलानि भवन्ति स्म प्राचीने काले" - इति विवृतवान् देवनाथवर्यः ।

"अहो, रमणीयः कालः आसीत् सः !" - सन्दीपः सन्तोषेण अवदत् ।

"तात ! तस्य कालस्य प्रशंसां करोति एषः । किन्तु गुरुकुले एकं दिनम् अपि प्रायः स्थातुं न अशक्ष्यत् सः । यतः तत्र बेट्मिण्टनादीनि क्रीडासाधनानि न आसन्" - चमेली सोपहासम् अवदत् ।

"तथापि न अभविष्यत् चिन्ता । आधुनिकक्रीडासाधनानाम् अभावे सत्यपि अन्याः प्राचीनाः क्रीडाः आसन् एव, यासां च क्रीडनार्थम् आधुनिके नगरे स्थलम् एव न भवति । ताः क्रीडन् अहं समयम् अयापयिष्यम्" इति सन्दीपः स्वपक्षं समर्थितवान् ।

"युक्तम् एतत् । आधुना यानि क्रीडासाधनानि दृश्यन्ते तानि प्राचीने काले न आसन् । तथापि क्रीडायाः व्यायामस्य वा अभावः तत्र न आसीत् । शारीरकव्यायामार्थं क्रीडार्थं च उत्कृष्टाः पद्धतयः



*अनुवर्तमाना कथामाला*

आसन् तदा । मल्लयुद्ध-धावन-तरण-वृक्षारोहादीनां प्रचुरप्रयोगः आसीत् तदा । श्वासनियन्त्रण-सम्बद्धाः कबड्डीप्रभृतयः क्रीडाः अद्यापि क्रीड्यन्ते, याश्च प्राचीनशैलीम् अनुकुर्वन्ति । ताः क्रीडाः शरीरशक्तिवर्धिकाः भवन्ति । क्षत्रिय-परिवारस्य बालाः तु धनुर्विद्यायां, खड्गप्रयोगे, दण्डप्रयोगे च निपुणाः भवन्ति स्म'' देवनाथवर्यः अवदत् ।

''तस्मिन् काले वर्णव्यवस्थापालनम् अति-कठोरतया भवति स्म खलु ?'' इति पृष्टवान् सन्दीपः ।

''आम् । वर्णव्यवस्थायाः आरम्भविषये अधिकं विवरणं किमपि न उपलभ्यते । किन्तु एतत् तु स्पष्टम् यत् वर्णव्यवस्था नाम जाति-व्यवस्था न । व्यक्तेः स्वभावे व्यवहारे च सामञ्जस्यम् आनेतुम् एव एषा वर्णव्यवस्था आरब्धा । समाजे केचन साहसकार्यम् आधिक्येन इच्छन्ति स्म । तेषां कृते क्षात्रवृत्तिः आसीत् । ये वाणिज्यादिव्यवहारे रुचिं प्रदर्शयन्ति स्म ते वैश्याः आसन् । केचन कृष्यादिविविधसेवाः कर्तुम् इच्छन्ति स्म । ते शूद्राः इति निर्दिष्टाः । अध्ययनाध्यापने यजन-याजन-ध्यानादिषु ये निरताः भवन्ति स्म ते ब्राह्मणाः इति निर्दिष्टाः । सर्ववर्णीयानाम् अपि समानमहत्त्वम् आसीत् तदा । एषा वर्णव्यवस्था वंशानुगुणा तन्नाम जन्मजाता न आसीत्'' - देवनाथः अवदत् ।

''एवं तर्हि कथं तत्र वंशानुगतता आगता ?'' - सन्दीपः कुतूहलेन अपृच्छत् ।



''तत्र व्यावहारिकं कारणम् अस्ति । अध्ययनाध्यापन-यजन-याजनादियुक्ते परिसरे जातः ब्राह्मणपुत्रः तादृशे एव परिसरे आसक्तः जातः । क्षत्रियपुत्रः पित्रा क्रियमाणेषु शस्त्रप्रयोगेषु आसक्तिं वहन् ताः एव विद्याः अध्येतुम् उद्युक्तः जातः । अन्यवर्णीयानाम् अपि एषा एव कथा । पितरः आत्मना ज्ञातां विद्यां पुत्रान् बोधयितुम् उत्सुकाः आसन् एव । अतः वर्णव्यवस्था परम्परागता जाता । यावत् वर्णान्तरस्य आश्रयणस्य स्वातन्त्र्यम् आसीत् तावत् तस्यां व्यवस्थायां न कोऽपि लोपः आसीत् । किन्तु यदा तारतम्यभावः आरब्धः, श्रेष्ठकनिष्ठभावना आरब्धा, तदा क्लेशाः उत्पन्नाः । वस्तुतः दोषः नास्ति व्यवस्थायां, प्रत्युत भवति मानवेषु । कस्मिंश्चित् दिने वयं स्वदोषम्

अवगत्य आत्मानं परिष्कुर्याम इति अहं चिन्तयामि ।''

''वर्णपरिवर्तनार्थम् अवकाशः आसीत् पूर्वम् इति भवता उक्तं खलु ? कुलवृत्तिं परित्यज्य अन्यां वृत्तिं स्वीकृतवतः कस्यचित् उदाहरणं किं



भवान् वक्तुं शक्नुयात् ?'' इति पृष्टवती चमेली ।

''यदा वर्णव्यवस्था परम्परागता न आसीत् तदा तु बहवः वृत्तिपरिवर्तनं कुर्वन्ति स्म । यदा तस्याः वंशपारम्पर्यगतत्वम् आयातं तदा अपि वृत्तिपरिवर्तनम् असाध्यं न आसीत् । राज्ञा प्रजाभिः च समानतया पूज्यमानाः ऋषयः शिष्यगणस्य प्रकृतिम् अवगत्य कः कस्यां वृत्तौ योजनीयः इति निर्णयं कुर्वन्ति स्म । एकस्य तु लिखितविवरणं विस्तृततया लभ्यते, यश्च अग्रे महर्षित्वेन प्रख्यातः जातः ।''

''तस्य नाम किम् ? सः किमर्थं तथा कृतवान् ?'' इति चमेली सन्दीपः च कुतूहलेन पृष्टवन्तौ युगपत् एव ।

तदा देवनाथवर्यः कथाम् आरब्धवान् -

''अरण्यसीमापरिसरे काचित् स्त्री स्वपुत्रेण सह निवसति स्म । तस्याः कुटीरस्य पार्श्वे एका नदी वहति स्म । नद्याः अपरस्मिन् तीरे एकं गुरुकुलम् आसीत् । तस्य गुरुकुलस्य सञ्चालकः आसीत् महर्षिः गौतमः ।

प्रतिदिनं सः बालकः नद्यां स्नानं कुर्वन् नद्याः अपरपार्श्वे स्नानं कुर्वतः स्वसमवयस्कान् बालकान् पश्यति स्म । गुरुः तान् गायत्रीमन्त्रं, सूर्यनमस्कारमन्त्रम्, अन्यमन्त्रान् च पाठितवान् आसीत् । ते स्नानसमये तान् उच्चारयन्ति स्म । तत् श्रुत्वा अयं बालकः चिन्तयति स्म - 'किम् अहम् अपि ते बालाः इव कर्तुं शक्नुयाम्' इति ।

एकदा सः स्वस्य इच्छां मातरं निवेदितवान् । तदा सा उक्तवती - ''यदि कोऽपि भवतः पाठनम् अङ्गीकुर्यात् तर्हि भवान् अपि मन्त्रज्ञः भवेत् । अतः भवान् गुरुकुलं गत्वा गुरुं विद्याभ्यासं याचतु'' इति ।

अनन्तरदिने बालकः नदीं तीर्त्वा गुरुकुलं गत्वा गुरुं गौतमं स्वस्य इच्छां निवेदितवान् । गुरुः तस्य जिज्ञासां दृष्ट्वा नितरां सन्तुष्टः । बालकस्य पृष्ठभूमिकाम् अवलम्ब्य पाठ्यक्रमः निर्णेतव्यः आसीत् इत्यतः गुरुः तम् अपृच्छत् - ''भवतः कुलं किम् ?'' इति ।

''अहं न जानामि'' इति विनयेन अवदत् बालकः ।

''भवतः पिता जानीयात् । तं पृष्ट्वा आगच्छतु'' - गुरुः असूचयत् ।

''मम पिता इदानीं न जीवति'' इति बालकः अवदत् ।

''भवतः माता स्यात् खलु ? तां पृष्ट्वा

आगच्छतु'' इति गुरुः अवदत् ।

गृहं गत्वा अनन्तरदिने प्रत्यागतः बालकः उक्तवान् यत् मम माता मदीयं कुलं किम् इति न जानाति इति ।

''भवान् स्वकुलं न जानाति । पिता तु न जीवति । एवं तर्हि भवतः गृहजीवनस्य किं स्वरूपम् ?'' इति पृष्टवान् गौतमः ।

तदा बालकः अवदत् – ''मम माता विभिन्ने काले विविधेषु गृहेषु कार्यं करोति स्म । कदाचित् केनचित् कर्मकरेण सा परिणीता । तस्य कुल-गोत्रादिज्ञानतः पूर्वम् एव सः महाव्याधिग्रस्तः सन् मरणं प्राप्तवान् । दायादाः मम मातरं दूरे स्थापित-वन्तः । मम जन्मनः अनन्तरं सा नदीतीरे वासम् आरब्धवती । काष्ठानि फलानि च विक्रीय सा अल्पं धनं सम्पादयन्ती दिनानि यापयति'' इति ।

''वत्स ! सत्यवादी भवान् । भवतः सत्यवादिता एव मच्छिष्यार्हतां निरूपयति । अद्य आरभ्य अत्र वसन् भवान् वेदाध्ययनं करोतु'' इति अवदत् गौतमः ।

तदा कश्चन ऋषिः अपृच्छत् – ''अज्ञात-कुलगोत्रः कथं वेदाध्ययनं कर्तुम् अर्हति ?'' इति ।

''एतस्य सत्यवादिता एव एतदीयां सत्कुलप्रसूतिं निरूपयति । असत्यकथनस्य अवसरे प्राप्ते अपि एतेन एतस्य मात्रा वा असत्यं न उक्तम् । अतः सत्कुलप्रसूतः अयं वेदाध्ययनस्य अधिकारी अस्ति एव'' इति शान्तगम्भीरस्वरेण अवदत् गौतमः ।

सः बालकः सत्यप्रियः आसीत् इत्यतः गौतमः तं 'सत्यकाम'शब्देन निर्दिष्टवान् । तस्य मातुः नाम जबाला इति । जबालायाः पुत्रः सः 'सत्यकामजाबालिः' इति नाम्ना प्रसिद्धः जातः ।''

''अहो ! महर्षेः तस्य गुणग्राहिता । सत्यकामं शिष्यत्वेन स्वीकुर्वतः तस्य धैर्यं प्रशंसार्हम् । तदानीन्तनः समाजः अपि तस्य निर्णयं, विरोधं विना अङ्गीकरोति स्म यत् तदपि आश्चर्याय'' इति अवदत् सन्दीपः ।

''एतदपि अत्र स्मर्तव्यं यत् यः ऋषिः भवति, सः जात्यादिभेदभावनाम् अतिक्रान्तवान् भवति इति'' इति अवदत् देवनाथवर्यः ।




THE AMUL CHEESE BOY
in PICNIC PANIC
One bright sunny day...
...a picnic is in progress.
Little Munnu Verma Crawls away.
Suddenly, huge rocks came tumbling down the mountain.
Amul cheese boy eats an Amul cheese slice...
...and becomes strong and powerful.
He smashes the falling rocks...
BANG
...reducing them to small pieces.
CRACK
All thanks to the cheese that has more milk in it.
Munnu is rescued and back with his family.
Amul cheese slices.
Amul



# पिशाचयोः प्रतीकारः

चम्पकपुर्यां शूरसेनः नाम युवकः निवसति स्म । बाल्ये एव तदीयौ मातापितरौ दिवङ्गतौ आस्ताम् । किञ्चित्कालं मातुलः तं पोषितवान् । किन्तु दौर्भाग्यवशात् सोऽपि दिवङ्गतः । अतः शूरसेनः अनाथः जातः । ग्रामीणाः एव तस्य पालनपोषणं कृतवन्तः । गच्छता कालेन शूरसेनः यदा प्राप्तवयस्कः जातः तदा सः सुदृढकायः धैर्यवान् युवकः अभवत् ।

शूरसेनस्य ग्रामः एव गृहम् । ग्रामीणाः एव तस्य मातापितरः । यदि ग्रामे कस्यचित् अपि गृहे कोऽपि कार्यक्रमः स्यात् तर्हि शूरसेनः आह्वानं विना अपि स्वयमेव तत्र गत्वा कार्ये निरतः भवति स्म । अल्पोऽपि लोपः यथा न भवेत् तथा श्रद्धया कार्यं करोति स्म । रात्रौ सर्वेषां क्षेत्राणि क्रूरजन्तुभ्यः रक्षति स्म । अजादीन् एव न, वृकान् अपि सः धैर्येण सम्मुखीकरोति स्म । अपायात् अपि भीतः न भवति स्म । अतः ग्रामीणाः तस्य प्रशंसां कुर्वन्ति स्म - ''शूरसेनः वस्तुतः अपि महाशूरः'' इति ।

एकदा तद्ग्रामीणः पण्डितः अनिलशास्त्री तम् आहूय अवदत् - ''अये, शूरसेन ! ग्रामसीमायां स्थिते तिन्त्रिणीवृक्षे एषु दिनेषु उभौ पिशाचौ वासम् आरब्धवन्तौ इति भवता ज्ञायते वा न वा इति अहं न जानामि । तौ पिशाचौ नगरतः आगच्छतः जनान् बहुधा पीडयतः । अतः समग्रः ग्रामः ताभ्यां भीतः अस्ति । अन्यच्च ग्रामस्थं योगिनीदेवीमन्दिरं प्रति श्वः राजा आगमिष्यति । अहं चिन्तयामि यत् तौ पिशाचौ राज्ञः अशुभं किमपि कर्तुम् अर्हतः इति । कथमपि तत् निवारणीयम् । अन्यथा अस्माकं ग्रामस्य महती अपकीर्तिः भविष्यति । महाशूरः भवान् केनापि उपायेन तयोः पीडां निवारयतु । यदि भवान् तत् करोति तर्हि अहं राजास्थाने भवते उद्योगं दापयेयम्'' इति ।

शूरसेनः शास्त्रिवर्यस्य वचनं श्रद्धया श्रुत्वा



अवदत् - ''पण्डितवर्य ! अहम् एतस्मिन् ग्रामे सुखेन वसामि । अतः राजास्थाने मम उद्योगः न आवश्यकः । तथापि राज्ञः अपायः यथा न सम्भवेत् तथा व्यवस्थाचिन्तनम् अस्माकं धर्मः । राजा सपरिवारम् अस्माकं ग्रामम् आगमिष्यति इति तु महते सौभाग्याय । अतः योग्या रक्षणव्यवस्था अस्माभिः चिन्तनीया एव । भवान् पिशाचपीडाविषये निश्चिन्तः भवतु । अहं तयोः विषये यथायोग्यं करिष्यामि'' इति ।

शूरसेनः तस्यां रात्रौ तिन्त्रिणीवृक्षस्य समीपे गुल्मे निलीय स्थितवान् । अनतिदूरे स्थितस्य शिथिलकूपस्य पार्श्वे तेन उभौ पिशाचौ दृष्टौ । तयोः एकः दुर्बलकायः उन्नतः च आसीत् । अपरः स्थूलः वामनः च आसीत् । तौ परस्परवार्तालापं कुरुतः स्म ।

उन्नतः पिशाचः अवदत् - ''आवां यस्य सुन्दरसरोवरस्य तीरे वसावः स्म तं प्रदेशं प्रति राजा मृगयार्थं ससैन्यम् आगमनम् आरब्धवान् । एकान्तवासभङ्गस्य कारणतः आवाभ्यां तत् स्थलं त्यक्तव्यम् अभवत् । एतस्मिन् च अप्रशस्ते स्थले वासः करणीयः अभवत् । एतद्विषये प्रतीकारसाधनार्थं सुसमयः प्राप्तः अस्ति आवाभ्याम् । श्वः राजा एतं ग्रामं प्रति आगच्छन् अस्ति'' इति ।

''युक्तम् उक्तं भवता । न केवलं राजानम्, अपि तु तत्परिवारम् एव आवां नाशयाव'' इति अवदत् स्थूलपिशाचः ।

''यदा राज्ञः रथः ग्रामपरिसरे स्थितस्य पर्वतस्य मूलभागं प्राप्नोति तदा अहं पर्वत-शिखरात् महतीं शिलां पातयिष्यामि । तदा रथस्थाः सर्वे प्राणैः वियुक्ताः भविष्यन्ति'' इति अवदत् उन्नतपिशाचः ।

''यदि कथञ्चित् राजा सजीवम् अग्रे गच्छेत् तर्हि अहं पूजामण्डपे अग्निं योजयिष्यामि । राजानं सपरिवारं भस्मी-करिष्यामि'' इति अट्टहासपूर्वकम् अवदत् स्थूलपिशाचः ।

''यदि राजा एतस्मात् अपायद्वयात् अपि रक्षितः भवेत् तर्हि किं वा करणीयम् आवाभ्याम् ?'' इति प्रश्नम् उद्भावितवान् उन्नतपिशाचः ।

क्षणकालं विचिन्त्य स्थूलपिशाचः अवदत् - ''यावत् प्रतीकारः सिद्धः न भवति तावत् मौनेन न स्थातव्यम् आवाभ्याम् । अपायद्वयात् अपि राजा यदि रक्षितः स्यात् तर्हि भवान्

राज्ञः ताम्बूलपात्रे विषकीटत्वं प्राप्य निवसतु । राजा भोजनानन्तरं यदा ताम्बूलपात्रम् उद्घाटयिष्यति तदा भवान् तस्य हस्तं दष्ट्वा विषेण तं मारयतु । अहं च विषसर्पत्वं प्राप्य राज्ञ्याः पुष्पपात्रे रहस्यरूपेण स्थास्यामि । राज्ञी यदा पुष्पस्वीकरणार्थं पुष्पपात्रे हस्तं प्रसारयिष्यति तदा दंशनेन अहं तां मारयिष्यामि'' इति ।

''अहो ! अपूर्वः उपायः चिन्तितः भवता । एवं क्रियते चेत् राजा मरणं प्राप्स्यति इति तु निश्चितम् । आवयोः प्रतीकारेच्छा सफला जाता इव'' इति वदन् उच्चैः अहसत् उन्नतपिशाचः । ततः तौ सन्तोषातिरेकेण नृत्यम् आरब्धवन्तौ ।



अनन्तरदिने शूरसेनः ग्रामात् बहिः स्थितवान् । राज्ञः रथः यदा आसन्नः तदा हस्तसङ्केतेन तं स्थगितवान् । ततः स्वस्य नामादिकम् उक्त्वा – ''अग्रे पर्वतसमीपे अपायसम्भावना अस्ति । अतः पर्वतमूलं यदा प्राप्यते तदा हठात् रथस्य वेगः वर्धनीयः । राज्ञः अपायः कोऽपि यथा न भवेत् तथा विशेषजागरूकता आश्रयणीया'' इति सूचितवान् ।

एतत् श्रुत्वा राजा मन्त्रिणः मुखं प्रश्नार्थकदृष्ट्या दृष्टवान् । तदा मन्त्री अवदत् – ''एतस्य प्रदेशस्य विशेषपरिचयः ममापि नास्ति । अतः एषः युवकः यथा वदति तथा करणं वरम्'' इति ।

शूरसेनेन यथा उक्तं तथैव कृतवान् सारथिः । पर्वतमूलं यदा प्राप्तं तदा झटिति वेगं वर्धितवान् सः । अतः पिशाचेन पातितायाः शिलायाः पतनात् पूर्वम् एव राज्ञः रथः अग्रे अगच्छत् । राजा अपायात् रक्षितः जातः । सर्वे एतां घटनां दृष्ट्वा आश्चर्यचकिताः । 'शूरसेनेन एषा अपायसम्भावना कथं पूर्वम् एव ज्ञाता ?' इत्यपि ते आश्चर्यं प्राप्तवन्तः । राजा कृतज्ञतावचनानि अवदत् । सेनापतिः मन्त्री च राजानं सूचितवन्तौ यत् एतस्य सम्माननं करणीयम् इति । राजा सम्मतिं सूचितवान् ।

एतदनन्तरं रथः ग्रामं प्राविशत् । ग्रामीणाः राजपरिवारस्य स्वागतार्थम् एकां वेदिकां रचितवन्तः आसन् । तदुपरि राज्ञः, राज्ञ्याः, राजकुमार्याः च उपवेशनार्थम् उन्नतानि आसनानि स्थापितानि आसन् । यदा राजा पत्नीपुत्रीभ्यां सह वेदिकाम् आरोढुम् उद्युक्तः



तदा शूरसेनः तत्र आगत्य - ''महाराज ! भवन्तः वेदिकाम् आरुह्य आसनेषु मा उपविशन्तु । इतः आरुह्य ततः झटिति निर्गच्छन्तु । अन्यथा महती विपत्तिः सम्भवेत्'' इति निवेदितवान् ।

स्थूलः पिशाचः वेदिकायाः अधः उपविश्य राज्ञः वेदिकारोहणम् एव प्रतीक्षमाणः आसीत् । यदा राजा, राज्ञी, राजकुमारी च वेदिकायाः उपरि पदं स्थापितवन्तः तदा सः पिशाचः वेदिकायां महान्तम् अग्निं योजयित्वा अवदत् - 'राजा सपरिवारं विनश्यतु' इति ।

किन्तु तावता राजा, राज्ञी, राजकुमारी च अपरपार्श्वे वेदिकातः निर्गताः आसन् । अतः अग्निज्वाला तान् न अस्पृशत् । क्षणमात्रेण वेदिका तु भस्मसात् जाता । ग्रामे हाहाकारः उत्पन्नः । एषा घटना कथं घटिता इति केनापि न ज्ञातम् । सर्वे आश्चर्येण स्तब्धाः ।

एतां घटनां दृष्ट्वा मन्त्री सेनापतिः च शूरसेने सन्देहं प्राप्य राजानम् उक्तवन्तौ - ''प्रभो, भवतः प्राणापायः अस्ति इति अवसरद्वये अपि एतेन तरुणेन पूर्वम् एव ज्ञातम् आसीत् । एषः कश्चन मायावी कुतन्त्री वा स्यात् । यावत् वस्तुस्थितिः स्पष्टा न भवति तावत् एतस्य कारागारे स्थापनं वरम्'' इति ।

''तथैव भवतु'' इति अवदत् राजा ।

सैनिकाः यावत् शूरसेनं बन्धुं गतवन्तः तावता ग्रामाधिकारी राजानम् अवदत् - ''प्रभो ! अहं एतम् आबाल्यात् जानामि । एषः अनाथः, किन्तु महापरोपकारी । अन्येषां साहाय्याचरणम् एतस्य स्वभावः । मन्त्र-तन्त्रादीनाम् एतस्य च न कोऽपि सम्बन्धः'' इति ।

तदा शूरसेनः शान्तस्वरेण राजानम् अवदत् - ''महाराज ! द्वयोः पिशाचयोः कारणतः अद्य रात्रौ भवतः राज्ञ्याः च प्राणापायस्य सम्भावना अस्ति । यदि अहं भवद्भ्यां सह स्यां तर्हि अपायं निवारयितुं शक्नुयाम्'' इति ।

तदा मन्त्री असूचयत् - ''महाप्रभो ! एतं वयं राजभवनं नयाम । एतेन यथा उच्यते तथा यदि अपायः सम्भवेत् तर्हि एषः एव खलु रक्षणोपायं सूचयेत् ? अपायविषये उपेक्षा अनुचिता'' इति ।

राजा एतत् अङ्गीकृतवान् । ततः शूरसेनः राजपरिवारेण सह राजधानीम् अगच्छत् ।

आपतिष्यतः अपायस्य निवारणार्थं मन्त्री सेनापतिः च तस्यां रात्रौ राजभवने एव स्थितवन्तौ ।

रात्रौ भोजनं समाप्य राजा यदा ताम्बूलपात्रं उद्घाटयितुम् उद्युक्तः तदा शूरसेनः झटिति आगत्य ताम्बूलपात्रं राज्ञः हस्तात् स्व्यकरोत् । अतः राजा विषजन्तुदंशनतः रक्षितः जातः ।

अत्रान्तरे शूरसेनेन लक्षितं यत् राज्ञी पुष्पस्वीकरणार्थं पुष्पपात्रे हस्तं प्रसारयन्ती अस्ति इति । शूरसेनः उच्चस्वरेण राज्ञीं तस्मात् कार्यात् निवार्य धावन् गत्वा पुष्पपात्रस्य पिधानम् अकरोत् । अतः राज्ञी सर्पदंशनात् रक्षिता जाता ।

एतत्सर्वं सर्वे यदा आश्चर्येण पश्यन्तः आसन् तदा शूरसेनः राजानम् उद्दिश्य - ''महाराज ! भवान् सैनिकान् आज्ञापयतु यत् ताम्बूलपात्रं पुष्पपात्रं च षट्पादगभीरतायुक्ते गर्ते निखननीयम् इति । तयोः अन्तः पिशाचौ स्तः । तौ राजपरिवारस्य नाशनार्थं कृतसङ्कल्पौ आस्ताम्'' इति उक्त्वा पिशाचकथां श्रावितवान् ।

शूरसेनस्य वीरतां परोपकारितां च दृष्ट्वा राजपरिवारीयाः सर्वे अतीव सन्तुष्टाः अभवन् । राजकुमारी अवदत् - ''तात ! शूरः अयम् अस्माकं देशस्य सेनाधिपतिः स्यात्'' इति ।

राज्ञी अवदत् - ''महाबुद्धिमान् एषः अस्माकं देशस्य मन्त्री भवेत्'' इति ।

स्व-स्व-पदस्य विपत्तिं ज्ञात्वा सेनापतिः मन्त्री च उक्तवन्तौ - ''महाराज ! सर्वगुण-सम्पन्नः धीरः, बुद्धिमान् एषः युवराज्ञीं परिणीय यदि देशस्य उत्तराधिकारी भवेत् तर्हि एव वरं स्यात्'' इति ।

राजा यथापूर्वं शिरः चालयन् स्वस्य सम्मतिम् असूचयत् ।

'राजा स्वयं चिन्तने सर्वथा असमर्थः । अन्ये यत् वदन्ति तत् विना चिन्तनम् अङ्गीकरोति सः । एतादृशस्य जनस्य समीपे क्षणकालं स्थितिः अपि अपायकरी' इति विचिन्त्य शूरसेनः ततः उत्थाय राजानं विनयेन नमस्कृत्य - ''प्रभो ! अहं क्षन्तव्यः । अस्वस्थस्य पितुः दर्शनार्थं मया त्वरया गन्तव्यम् अस्ति'' इति उक्त्वा ततः निर्गतवान् ।



# चन्दमामा

## स्वपरम्परा अभिज्ञायताम्

एतस्मिन् अङ्के प्रकाशितायाः प्रश्नावल्याः उत्तरम् अग्रिमे अङ्के प्रकाशयिष्यते । तदभ्यन्तरे एतेषाम् उत्तरं स्वयं ज्ञात्वा भारतस्य प्राचीनपरम्पराम् अवगत्य ज्ञानं सुसमृद्धं क्रियताम् ।

1



१. अ) तौ श्रेष्ठौ पैगम्बरौ कौ, यौ च समकालिकौ राजवंशीयौ च आस्ताम् ।

आ) बौद्धधर्मस्य अतिप्राचीनाः ग्रन्थाः कया भाषया रचिताः सन्ति ?

इ) जैनधर्मस्य अतिप्राचीनाः ग्रन्थाः कया भाषया रचिताः सन्ति ?

ई) जैनधर्मस्य अतिप्राचीन-ग्रन्थानां नामानि कानि ?

2

पुराणकालिकः कश्चन राजा मृगयार्थम् अरण्यं गतवान् आसीत् । तत्र तेन यः पशुः मारितः तस्य रक्ततः तदीयं वस्त्रम् आर्द्रं जातम् । सः तत् वस्त्रं राज्ञ्यै प्रेषितवान् । सः वस्त्रवाहकम् उक्तवान् यत् राज्ञीं किमपि अनुक्त्वा रक्तरञ्जितं वस्त्रं तस्याः पुरतः स्थापयतु इति । मदीयानि रक्तमयानि वस्त्राणि दृष्ट्वा मां मृतं चिन्तयित्वा राज्ञी कथं व्यवहरेत् इति मया ज्ञातव्यम् इति तस्य इच्छा आसीत् ।

विनोदार्थं तेन कृतं कार्यं महते अनर्थाय जातम् । यतः यावत् राजा अन्तःपुरम् आगतः तावता शोकाहता राज्ञी दिवङ्गता आसीत् ।

सः राजा कः । तस्याः राज्ञ्याः नाम किम् ?



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्कफलकम् - score board
अक्षम्यः - unpardonble
अन्तर्हितः - disappeared
अपनेतव्यः - should be removed
अपरिहार्यतया - compulsarily
अवधारितम् - kept in mind
आतिथेयः - host
उत्कीर्य - having scratched
उत्कोचः - bribe
ऐदम्प्राथम्येन - for the first time
ओतप्रोतम् - extending in all directions
कशाप्रहारः - flogging
काष्ठम् - wood
किलाटः - cheese
छात्रवृत्तिः - scholarship
तारतम्यभावः - comparative value
दुर्बलकायः - lean
निरस्तः - cancelled
परम्परा - tradition
पारावतः - dove
पित्तलम् - bronze
प्रवर्तितः - enlightened
प्रशिक्षणम् - training
प्रायोजकः - sponsorer
बन्धुम् - to arrest
भृतिः - wages
युगपत् - at a time
वन्यसूकरः - wild boar
वलयः - circle
विद्धम् - whipped
व्यत्यस्ता - displaced
व्याहृतम् - expressed
शिथिलकूपः - abandoned well
सद्योहृतम् - fresh
समवयस्कः - of my age
सर्षपः - mustard
सामञ्जस्यम् - adjustment
सोपहासम् - with ridicule

★ ★ ★



# भारतम्

## पूर्वम् इदानीं च

# पुरी

### जगन्नाथस्य आवासभूमिः

पुरीनगरं भारतस्य पूर्वसमुद्रतटे ओरिस्सा-राज्ये अस्ति । अतिप्राचीनं नगरम् एतत् । अत्रत्याः इष्टदेवाः जगन्नाथः, तस्य अग्रजः बलरामः, तदनुजा सुभद्रा च । इदानीं यत् जगन्नाथमन्दिरम् अस्ति तत् चोडागङ्गदेवेन द्वादशे शतके निर्मापितम् । ततः पूर्वम् एषा मूर्तिः अन्यस्मिन् मन्दिरे (अन्येषु मन्दिरेषु वा) आसीत् ।

अत्रत्यः जगन्नाथः काष्ठमयः । काष्ठमयत्वस्य विषये एवं हि श्रूयते यत् एतस्यां प्रतिमायां रहस्यमयः कश्चन पदार्थः अस्ति, नूतना प्रतिमा यदा प्रतिष्ठाप्यते तदा सः पदार्थः तस्यां निधीयते इति । स च पदार्थः कृष्णस्य भौतिकशरीरस्य अवशेषः । तं च विश्वावसुनामकः आदिवासिनायकः पेटिकायां संस्थाप्य पूजयति स्म । विश्वावसुः तस्य शबरस्य वंशे जातः, यश्च श्रीकृष्णे बाणप्रयोगं कृतवान् आसीत् ।

पूर्वम् इन्द्रद्युम्नः नाम राजा आसीत् । तस्य मनसि कदाचित् विचारः आगतः यत् श्रीकृष्णस्य शरीरस्य अवशेषः पुरीनगर्याः समीपे स्थिते अरण्ये कुत्रचित् स्यात् एव इति ।

अतः सः चतसृषु दिक्षु चतुरः तीक्ष्णमतीन् प्रेषितवान् अवशेषस्य अन्वेषणार्थम् ।

तेषु अन्यतमः विद्यापतिः पूर्वदिशायां गत्वा विश्वावसोः अतिथिः जातः । विश्वावसोः पुत्री ललिता । विद्यापति-ललितयोः मध्ये अनुरागः उत्पन्नः । अल्पे एव काले तौ विवाहितौ जातौ । कदाचित् विद्यापतिः ज्ञातवान् यत् श्वशुरः प्रतिदिनं काञ्चित् गुहां गत्वा कमपि पदार्थं पूजयति इति । सः श्वशुरम् उक्तवान् - 'अहं भवता पूज्यमानं वस्तु द्रष्टुम् इच्छामि' इति । विश्वावसुः तस्य नेत्रे वस्त्रेण बद्ध्वा तं गुहां नीतवान् । किन्तु विद्यापतिः मार्गाभिज्ञानाय कञ्चित् उपायं कृतवान् । सः गमनसमये सर्षपान् नीत्वा मार्गे पातितवान् ।

तत्र गमनानन्तरं विद्यापतिः सुस्पष्टं ज्ञातवान् यत् गुहायां श्रीकृष्णस्य अवशेषाः सन्ति इति । ततः प्रतिगमनानन्तरम् अल्पे एव काले तेन पातिताः सर्षपाः अङ्कुरिताः । एतेन विद्यापतिः मार्गं ज्ञातवान् । कदाचित् सः एकः एव अरण्यं गतवान् । ताम् एव सर्षपपङ्क्तिम् अनुसरन् सः गुहां प्राप्तवान् । तत्रत्याम् अवशेषयुक्तां पेटिकां नीतवान् । राज्ञे इन्द्रद्युम्नाय दत्तवान् च । इन्द्रद्युम्नः अतीव सन्तुष्टः अभवत् । सः अरण्यं गत्वा विश्वा-वसुम् उक्तवान् - ''भगवतः अवशेषान् सर्वेभ्यः दर्शयितुम् एषः सुकालः'' इति ।

विद्यापति-ललितयोः वंशे जाताः एव जगन्नाथस्वामिनः पूजां कुर्वन्ति । विद्यापतिः ब्राह्मणः । ललिता व्याधवंशीया । एतस्मात् ज्ञायते यत् तत्काले जातिभेदः महत्त्वोपेतः न आसीत् इति ।

स्वामिनः जगन्नाथस्य यात्रा जुलैमासे प्रवर्तते । कृष्णस्य मथुरायात्रां स्मारयति एषः रथोत्सवः । लक्षशः जनाः एतस्मिन् रथोत्सवे भागं वहन्ति । मन्दिरे प्रसादरूपेण यादृशं दीयते तादृशम् एव सहस्राधिकवर्षेभ्यः पूर्वं जनाः सेवन्ते स्म ।

पुर्याम् अन्यानि अपि अनेकानि मन्दिराणि सन्ति । आधुनिकसौलभ्यानि अत्र सन्ति । अत्रत्यं समुद्रतीरम् अतिरमणीयम् अस्ति । अतः आकर्षकं विहारस्थलं तत् । प्रतिदिनं सहस्रशः तीर्थयात्रिणः पर्यटकाः च समुद्रस्नानं कृत्वा सिकतामये तीरे विहारं कुर्वन्ति ।

पुरीनगरं संस्कृताध्ययनस्य अपि केन्द्रम् अस्ति । आयुर्वेदाध्ययनसंस्थाः अपि तत्र सन्ति ।





# कृपणता

शिवपुरग्रामे शिवशरणः नाम कश्चन वणिक् आसीत् । सः ग्रामे वसति स्म । किन्तु तस्य आपणः आसीत् नगरे । सः धनसम्पादनं तु जानाति स्म, न तु व्ययम् ।

कदाचित् सः चिन्तयति स्म – नगरे वासः एव वरम् इति । किन्तु नगरे वासः अधिक-व्ययाय इति तं विचारं सः परित्यक्तवान् ।

व्ययविषये जागरूकता वोढव्या इति पत्नीं राधां स्मारयन् सः वदति स्म – ''बुभुक्षा-निवारणाय यावत् आवश्यकं तावत् एव सेवनीयम् । जिह्वाचापलार्थम् आहारः न सेवनीयः'' इति । अतः राधा प्रतिदिनम् अति-सामान्यभोजनम् एव सज्जीकरोति स्म । पर्वदिने अपि गृहे विशेषपाकः, क्षीर-दधि-शाकादयः वा विरलतया एव दृश्यन्ते स्म ।

राधा विवाहात् पूर्वं तु प्रतिदिनं रुचिकरं भोजनं, मधुरभक्ष्याणां सेवनं च करोति स्म । रुचिकरपाकं विना दिनयापनं कष्टाय भवति स्म राधायाः । अतः सा चिन्तितवती – 'पतिः दिने गृहे न भवति । तदा मया अपेक्षितः पाकः कर्तुं शक्यते' इति ।

एतदनुगुणं सा प्रतिदिनं पत्युः अनुपस्थितौ विविधभक्ष्याणि कृत्वा खादितुम् उद्युक्ता अभवत् । पतिः कुपितः भवेत् इति विचिन्त्य सा तं किमपि न उक्तवती एव ।

एकदा रात्रौ शिवशरणः यदा गृहं प्रत्यागतः तदा प्रतिवेशी तम् अवदत् – ''अद्य मम गृहे पूजाकार्यक्रमः आसीत् । भवान् आगत्य प्रसादं स्वीकृत्य गच्छतु । किन्तु राधावर्यायाः मधुरभक्ष्यस्य यावती रुचिः तावती रुचिः मम गृहस्य प्रसादभक्ष्यस्य न भवति'' इति । एतावत् उक्त्वा सः शिव-शरणाय द्वित्राणि मधुरभक्ष्याणि दत्तवान् ।

''मम पत्नी सामान्यपाकम् एव जानाति, न तु मधुरभक्ष्याणि'' इति अवदत् शिव-शरणः ।

''मित्र ! किम् उच्यते भवता ? सा सर्व-विधानि भक्ष्याणि कर्तुं शक्नोति । तया

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

क्रियमाणस्य पाकस्य गन्धस्य आघ्राणनात् एव तत् ज्ञायते । यदा भवद्गृहात् आगतः पाकगन्धः आघ्रायते तदा अहं पत्नीं वदामि - भवती राधातः पाककौशलं जानातु इति'' इति अवदत् प्रतिवेशी ।

एतत् श्रुत्वा शिवशरणः आश्चर्यचकितः । तथापि सः तदा किमपि न उक्तवान् । मौनेन गृहं गतवान् । सः प्रत्यक्षदर्शनात् एव वस्तुस्थितिम् अवगन्तुम् इष्टवान् । अतः सः अनन्तरदिने प्रातः यथापूर्वं गृहात् निर्गतवान् । किन्तु नगरम् अगत्वा गृहस्य पृष्ठद्वारतः विना शब्दं प्रविश्य एकस्मिन् कोणे निलीय उपविष्टवान् ।

तस्मिन् दिने राधा पूरिकाः पायसं लड्डुकानि च सज्जीकृतवती । इक्षुदण्डम् आनीय इक्षुरसं सज्जीकृतवती । सर्वस्य खादनस्य अनन्तरं सर्वाणि पात्राणि प्रक्षाल्य गृहं तथा व्यवस्थापितवती यत् तया कृतं पत्या किमपि न ज्ञायेत ।

शिवशरणः गृहे प्रवृत्तं सर्वं दृष्ट्वा विना शब्दं गृहात् निर्गतवान् । किञ्चित्कालानन्तरं पादे एकां वस्त्रपट्टिकां बद्ध्वा खञ्जन् दण्ड-साहाय्येन गृहं प्रत्यागतवान् च ।

एतत् दृष्ट्वा राधा आतङ्केन पृष्टवती - ''भवतः पादस्य किम् अभवत् ?'' इति ।

''अहो, सर्पः माम् अदशत्'' इति अवदत् शिवशरणः ।

''कीदृशः सर्पः सः ? किं पादे शोथः जातः ? किं महती वेदना बाधते ?'' इति राधा पृष्टवती ।

''सः सर्पः तावत् दीर्घः आसीत् यावत् दीर्घः आसीत् भवत्या आनीतः इक्षुदण्डः । भवत्या कृतं लड्डुकम् इव मम पादः स्फीतः अस्ति। भवत्या सज्जीकृतं पायसम् इव मम मुखम् उष्णतायुक्तम् अस्ति'' इति शिवशरणः अवदत् ।

पतिः मया कृतं सर्वं ज्ञातवान् इति ज्ञातवती राधा नितरां भीता । तस्याः मुखं कान्तिहीनं जातम् । शरीरे स्वेदः उत्पन्नः ।

तदा शिवशरणः हसन् उक्तवान् - ''राधे, भीतिः मास्तु । दोषः मम एव । आनुकूल्ये सत्यपि नीरसाहारस्य सेवनं, शरीरस्य शोषणं वा न युज्यते । धनसम्पादनस्य उद्देशः सुखं प्राप्तव्यम् इत्येव खलु ? अद्य आरभ्य मदर्थम् अपि रुचिकरं पाकं, मधुराणि भक्ष्याणि च सज्जीकरोतु'' इति ।



# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५



युक्ता शीर्षिका सप्टेम्बर् - २० तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य नवम्बर्मासे प्रकाशयिष्यते ।

## अभिनन्दनानि

'जुलै'स्पर्धाशीर्षिकाप्रेषकः-



**Gyoko Nagara**
1041, Akaiwa, Chiyodomachi
Oragun Gunmaken
JAPAN - 370 - 0503



*प्रथमचित्रम्* - वृद्धा याति पोषणाय वत्सस्य ।
*द्वितीयचित्रम्* - वत्सा यतते पूरणाय उदरस्य ।

